ISBN: 978-93-85145-08

# काव्यलतिका

सन्दर्भिता मूल्याङ्किता च

साहित्यविभागीया वार्षिकशोधपत्रिका

विक्रमाब्दः-२०७३-२०७४ क्रैस्ताब्दः-२०१६-२०१७

साहित्यविभागः

राष्ट्रियसंस्कृतसंस्थानम्

(विश्वविद्यालयसमम्)

(मानवसंसाधनविकासमन्त्रालयभारतसर्वकाराधीनम्)

क. जे. सोमैयासंस्कृतविद्यापीठम्,

विद्याविहारः, मुम्बई-४०००७७

# काव्यलतिका

सन्दर्भिता मूल्याङ्किता च

साहित्यविभागीया वार्षिकशोधपत्रिका

विक्रमाब्दः-२०७३-२०७४ कृस्त्वब्दः- २०१६-२०१७

या काव्यामृतवर्षिणी सुकृतिनां साहित्यकल्लोलिनी
विद्याशालिविपक्ष्विज्ञविमलोद्बोधैकदानोन्मुखी।
या नानारसभावरूपककलासंपूतसंवादिनी
सा सम्मोदभवाऽस्तु काव्यलतिका नित्यं मनोमोहिनी।।

**साहित्यविभागः**

राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

(मानवसंसाधनविकासमन्त्रालयभारतसर्वकाराधीनम्)

NAAC द्वारा 'A' श्रेण्यां प्रत्यायितम्

क. जे. सोमैयासंस्कृतविद्यापीठम्,

विद्याविहारः, मुम्बई-४०००७७

दूरभाषः-०२२-२१०२५४८२

ईमेल-kavyamumbaicampus@gmail.com

# काव्यलतिका

सन्दर्भिता मूल्याङ्किता च साहित्यविभागीया वार्षिकी पत्रिका

अध्ययनवर्षम्- २०१६ - २०१७

प्रकाशकः, समायोजकश्च प्रो. सुदेशकुमारशर्मा,
प्राचार्यः, राष्ट्रियसंस्कृतसंस्थानम्, क. जे. सोमैयासंस्कृत-विद्यापीठम्।
विद्याविहारः, मुम्बई-४०००७७.

पत्रिकासंरक्षकौ १. प्रो. परमेश्वरनारायणशास्त्री,
कुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्।
२. प्रो. एस्. सुब्रह्मण्यशर्मा,
कुलसचिवः, राष्ट्रियसंस्कृतसंस्थानम्।

मुख्यसम्पादकः- प्रो. ई. एम्. राजन्, विभागाध्यक्षः।

सम्पादकः- डा. नारायणन्. ई. आर्।

सहसम्पादकौ-
१. डा. स्वर्गकुमारमिश्रः।
२. डा. एम् सुदर्शनचिपळूणकरः।

वर्णचित्रसंयोजकः - डा. एम्. सुदर्शनचिपळूणकरः।

अक्षरविन्यसनम्- साहित्यविभागः।

**ISBN: 978-93-85145-08-8.**



मुद्रणम्-Shivalik Prakashan, 27/16,
Shakti Nagar, Delhi- 110007

प्रतिलिपयः- पञ्चाशत्। मूल्यम्- 495/-



## शुभाशंसनम्

षड्भिर्वेदाङ्गभर्ता निजमुखकमलैर्ज्ञानरूपी प्रपञ्चे
ज्योतिश्शास्त्रं प्रचार्य प्रथममतुलगुणं विश्वकल्याणकारी।
प्रारुह्य श्यामकण्ठं त्रिभुवनविजयी शूलभृत् कर्मसाक्षी
देवः कार्तान्तिकोऽस्मानवतु शिवभवस्तारकारिः प्रपन्नान्।।

शब्दार्थतत्त्वं तावल्लोके ज्ञानरूपं तमोहन्तृ विश्वक्षेमाय प्रवर्ततेतमाम्। किञ्च पार्वतीपरमेश्वरयोर्वागर्थस्वरूपतया वागर्थयोरुपमानतां पार्वतीपरमेश्वरयो-रुपमेयतां विधाय कालिदासो मङ्गलं विदधाति यथा-

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।** इति।

एवञ्चेदं शास्त्रं तयोः पार्वतीपरमेश्वरयोः कृपयैव प्रवर्तत इति निश्चप्रचम्। तत्र प्रकाशरूपी भगवान्, विमर्शरूपिणी भगवती पार्वतीति तयोः प्रकाश-विमर्शरूपता प्रसिद्धा। तदाहाभिनवगुप्तो लोचनमङ्गलस्योत्तरार्धे-

**क्रमात्प्रख्योपाख्यप्रसरसुभगं भासयति तत्**
**सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते।।** इति।

प्रकाशविमर्शौ च चन्द्रचन्द्रिकयोरिव 'भेदाभेदरूपौ तद्रूपतां सम्पन्नौ पार्वतीपरमेश्वरावस्यापि शास्त्रस्यापूर्वतां विधत्तः। ऐषमो राष्ट्रिय-संस्कृतसंस्थानस्य क. जे. सोमैयासंस्कृतविद्यापीठे साहित्यविभागीया वार्षिकी पत्रिका **काव्यलतिका** प्रकाशपदवीमुपेता चिरायाभासेतेति हृदयेनाशंसे। तत्र विशेषव्याख्यानमालायां रसगङ्गाधरीये रसविचारे काचनातुला रचना, अपि च रूपकेषु **नायको नायिका** चेति विषयमवलम्ब्य सप्तदश शोधपत्राणि प्रस्तुतानि, तान्यस्यामास्वादप्रायाणि विलसन्तीति मे मोदास्पदम्। तद्रचनाकर्तॄन् विदुषोऽभिनन्द्य पत्रिकेयं सहृदयानां विदुषाञ्च समक्षं समर्पये।

इति विदुषां वशंवदः

**विद्याविहारः**
३०-०३-२०१७

**प्रो. सुदेशकुमारशर्मा**
**(प्राचार्यः)**

ॐ

# ।।पुरोवाक्।।

**सुवर्णपदसंयुक्ता कुसुमाङ्गैस्सुशोभिता।**
**दर्शकानन्ददात्रीयं नः काव्यलतिका भवेत्।।**

ऐषमः साहित्यविभागीया **काव्यलतिका**नाम्नी शोधपत्रिका महता प्रयासेन प्राकाश्यं नीयत इति विज्ञापयितुं मोमुद्यते मे मनः। अमुष्मिन् वर्षेऽस्माभिरेष विषय उपस्थापितः-"रूपकेषु नायको नायिका च" इति। तत्र पौनरुक्त्यं परिहर्तुं तत्तत्पत्रप्रस्तोतृभ्यः पृथक् पृथक् रूपकं निर्दिष्टम्, येन यावत्संख्याकाः पत्रप्रस्तोतारस्तावत्संख्याकेषु रूपकेषु नायकस्य नायिकायाश्च परिचयः पाठकानां भवेत्। **नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्** इति कविकुलगुरुणोक्तम्, तदनुसारेण पत्रिकायां प्रतिपादितेषु नानानायकेषु को ममाभिमतो नायिकासु केऽभिमतेति विवेचयितुमवसरः पाठकानां लभ्यते। इत्थं नैकानि प्रयोजनानि मनसिकृत्य विषयोऽयं चयितः।

महतां महदनुग्रहेणेयं सम्पन्नाभूत्तत्राचार्यः परमेश्वरनारायणशास्त्री, कुलसचिव आचार्य एस्. सुब्रह्मण्यशर्मा, एतस्याः पत्रिकायास्समाप्तावान्तमुचित-मुपदेशमसकृद्ददावस्माकं ददत् प्राचार्य आचार्यः सुदेशकुमारशर्मा च प्रथमगणनीयाः। **सङ्घे शक्तिः कलौ युग** इत्यस्त्याभाणकः। तदनुसारेणास्माभिस्समैस्समयोगेन योगदानमत्राकारि, येनेयं पत्रिका सम्पूर्णस्वरूपमुपगता।

येऽत्र पत्रप्रस्तोतारस्ते सर्वे कृतज्ञतासूनततिभिस्समादरणीया, यतो हि ते यथासमयं तेषां पत्रमस्मभ्यन्ददुः। अन्ते येऽवशिष्टा विशिष्टा परोक्षतयाऽस्माकं साह्यं कृतवन्तस्तेभ्योऽपि हार्दं धन्यवादं वितनोमि। भगवदनुग्रहेणेयं पत्रिका फलेग्राहिर्भूया-दित्याशास्य सहृदयसमक्षं प्रकल्पयामि।

इत्थं सहृदयसुधीविधेयः

प्रो. राजन् ई. एम्.
विभागाध्यक्षः

विद्याविहारः
३०-०३-२०१७



**प्रो. सुदेशकुमारशर्मा**
**प्राचार्यः**






## रचनानुक्रमणिका

# रसगङ्गाधरे रसविचारः

**प्रो. डा. जि. श्रीनिवासु**
आचार्यः, संस्कृत-भारतीयसंस्कृतिविभागः
श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालयः
एनात्तूर्, काञ्चीपुरम् - ६३१५६१

अग्निपुराणात् नाट्यशास्त्राच्च समारब्धः रसविचारः जगन्नाथपर्यन्तं बहुविस्तृतरूपेण विविधशास्त्रसंप्रदायानुसारं परिशीलितः परिलक्षितश्च संदृश्यते। "महाभाष्यान्तं व्याकरणम्" इतिवत् जगन्नाथान्तं काव्यशास्त्रमिति सर्वेषामभिप्रायः। पण्डितराजस्य ग्रन्थं यदि पश्यामः तर्हि संपूर्णस्यापि रसविचारस्य तत्त्वमवगम्यते।

रसस्तु भरतेन महर्षिणा साङ्गोपाङ्गतया सोदाहरणं सभेदं प्रदर्शितोऽपि तदनन्तरवर्तिनः भामहादयः आलङ्कारिका तम् अलङ्कारेष्वेव रसवदादिषु अन्तर्भावयामासुः। दृश्यकाव्येष्वेव रसस्य प्राधान्यमिति च चिन्तयामासुः।

आनन्दवर्धनेनैव रसस्य प्राधान्यं सर्वत्र काव्ये भवतीति अभिधाय काव्यात्मत्वेन समुट्टङ्कितम्।

आचार्यः अभिनवगुप्तः नाट्यशास्त्रस्य, ध्वन्यालोकस्य व्याख्यानं प्रख्यातमालिख्य वस्त्वलङ्काररसरूपेण त्रिविधे ध्वनौ रसध्वनेः महत्त्वमुररीचकार।

आनन्दवर्धनानन्तरं समागताः आलङ्कारिकाः प्रायशः सर्वेऽपि ध्वनिप्रस्थानानुयायिनः आसन्। ते सर्वे अभिनवगुप्तेन प्रभाविता अपि अभूवन्। तेषु आचार्यमम्मटः, पण्डितराजजगन्नाथश्च प्रमुखौ।

पण्डितराजपदभूषितो जगन्नाथः बहुविद्यापारङ्गतोऽपि नितान्तं सरसहृदयः आसीत्। तस्य जन्मदेशः अधुनातने आन्ध्रप्रदेशराज्ये वर्तते। प्राच्यगोदावरीमण्डले सस्यश्यामलः, नालिकेरप्रचुरेऽपि नानावृक्षसमुदाय-समुल्लसितः, 'मुंगंड' इति ग्रामः, 'कोनसीम' इति संज्ञया प्रसिद्धे स्थाने विराजमानः, तत्र प्रकृतेः रमणीयता सर्वेषां चेतांसि रञ्जयति। तत्रत्यं जलम्

मधुरम्, खाद्यवस्तून्यपि मधुरतराणि। अतः जनानां मनांस्यपि मधुरतमानि सुकुमाराणि च। सकलसम्पदाम् आवासत्वात् तद्वासिनां धनार्जनावश्यकता दरिद्रता च न भवतः। ततश्च ते सर्वदा चिन्ताविरहिताः सन्तः सकलविद्याः अभ्यस्यन्ति। बहुषु कुटुम्बेषु परम्परया वेदाध्ययनं, शास्त्राभ्यसनं, पुराणकालक्षेपः काव्यचर्चा इत्यादयः बुद्धिविकासकार्यक्रमाः अधुनापि प्रचलन्तीति महान् विशेषः।

जन्मन आरभ्य एतादृशपर्यावरणे पोषितः जगन्नाथः कथं वा तीक्ष्णमतिः, रसिकश्च न स्यात्? तस्य व्यक्तित्वमेव तादृशम्। तत्रत्याः जनाः अपमानम् ईषदपि न सहन्त इति बाल्यादेव प्रवृत्तिः दृश्यते।

जगन्नाथस्य पिता पेरुभट्टः अधीतसकलविद्यः। पितुस्सकाशादेव जगन्नाथस्य विद्याग्रहणमासीदिति स्वग्रन्थारम्भे वर्णयति -

**श्रीमद् ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः**
**काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।**
**देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं**
**शेषाङ्कप्राप्तशेषामलफलितिरभूत् सर्वविद्याधरो यः॥**[1] इति॥

पेरुभट्टः सरसहृदयश्चासीत् -

**पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।**
**तमहं शिरसा वन्दे लक्ष्मीकान्तं महागुरुम्॥**[2] इति।

सकलविद्यापारंगमेऽपि पेरुभट्टस्य जगन्नाथस्य च वेदान्ततत्त्वे एव अधिकादर इति ऊहितुं शक्यते - "अधिगतसकलब्रह्मविद्याप्रपञ्च" इति श्लोकादौ साभिप्रायविशेषणप्रयोगात्। काणादादीनि शास्त्राणि गहनशैलीनिबद्धान्यपि अवेदीत् इति कथनेन शास्त्रीयशैलीप्रयोगेऽप्ययं सुनिपुण इति अवगम्यते॥

एतादृशं पितृपरिचयं प्रददानो जगन्नाथः स्वीयग्रन्थरचनारीतिः वेदान्तशास्त्राधारेण तर्कशैल्या प्रवर्त्तिष्यत इति संसूचितवान् पीठिकारूपेणेति भाति।

**अग्निपुराणे रसविचारः -**





रसविषयको विचारः अग्निपुराणे संदृश्यते। लोके यानि विशिष्टानि वस्तूनि तानि सर्वाण्यपि भगवत्स्वरूपाण्येवेति पुराणसम्प्रदायः। ततश्च अलौकिकानन्दसन्दायकः रसोऽपि परमात्मस्वरूप इति अङ्गीकृतम्। अनेन रसस्य अनितरसमानं वैशिष्ट्यं प्रतिभाति। तदित्थं निर्दिष्टम् अग्निपुराणे -

**अक्षरं ब्रह्म परमं सनातनमजं विभुम्।**
**वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥**
**आनन्दः सहजस्तस्य व्यज्यते स कदाचन।**
**व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥**
**आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः।**
**ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्॥**
**अभिमानाद्रतिः सा च परिपोषमुपेयुषी।**
**व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते॥**
**तद्भेदः काममितरे हास्याद्या अप्यनेकशः।**
**स्वस्वस्थायिविशेषोऽथ परिपोषस्वलक्षणाः।**
**सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः॥**
**रागाद्भवति श्रृङ्गारो रौद्रस्तैक्ष्ण्यात्प्रजायते।**
**वीरोऽवष्टम्भजः सङ्कोचभूर्बीभत्स इष्यते॥**
**श्रृङ्गाराज्जायते हासो रौद्रात्तु करुणो रसः।**
**वीराच्चाद्भुतनिष्पत्तिः स्याद्बीभत्साद्भयानकः॥**
**श्रृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताख्याः स्वभावच्चतुरो रसान्।**
**लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा॥**

वेदान्तशास्त्रे "रसो वै सः[3]" इति वाक्ये, श्रृङ्गारादिना भिन्नः रस एव आनन्दापरपर्यायत्वेन प्रयुक्तः परमात्मेति कथितः। तस्य विकारश्च अहंकारः, ततश्च अभिमानः जायते, तत्रैव भुवनत्रयं समाप्तमिति प्रतिपादितम्। तस्यैव अभिमानस्य परिणामाः रत्यादयो भावाः, तेषां परिपोषादनुभूयमानः आनन्द एव तत्तद्भावाश्रयत्वात् श्रृङ्गारादिभिः शब्दैः व्यवह्रियते इति सूचितम्।

एवं च वेदान्तप्रक्रियया रसस्वरूपम् अवगन्तव्यमिति बुध्यते। अन्यशास्त्ररीत्या रसतत्वावगमः दुर्लभ इत्यपि अवगम्यते। सांख्यशास्त्रं तु अहंकारादीनां तत्त्वं, परिणामं, प्रयोजनं च विशदयतीति तद्रीत्या समालोचनं किञ्चित् मार्गप्रदर्शकम्।

पण्डितराजः जगन्नाथः अत्यन्तं समुचितया रीत्या रसस्वरूपं विपुलविचारसाधनीयमपि सरलया रीत्या सुस्पष्टमारचितवान् वाक्यरूपेण, यत् सूत्ररूपेण असंदिग्धतया वक्तुमसुलभम्।

तदित्थम् - **समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैः, तदीयसहृदयतासहकृतेन, भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिः अलौकिक-विभावानुभावव्यभिचारिशब्द-व्यपदेश्यैः, शकुन्तलादिभिरालम्बनकारणैः, चन्द्रिकादिभि-रुद्दीपनकारणैः, अश्रुपातादिभिः कार्यैः, चिन्तादिभिस्सहकारिभिश्च सम्भूय प्रादुर्भावितेन अलौकिकेन व्यापारेण, तत्कालनिवर्तितानन्दांशावरणाज्ञानेन अत एव प्रमृष्टपरिमित-प्रमातृत्वादिनिजधर्मेण प्रमात्रा, स्वप्रकाशतया वास्तवेन, निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः।**

अत्र रत्यादिरेव रसः इति मतस्य दार्ढ्यार्थं मम्मटवचनं प्रमाणत्वेन प्रदर्शयति जगन्नाथः - **"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः[4]"** इति। अत्र व्यक्तिर्नाम व्यञ्जनाव्यापारो न, अपि तु **व्यक्तिश्च भग्नावरणा चित्[5]।** व्यञ्जनाव्यापारः रसास्वादस्य कारणभूतः, अत्र व्यक्तिस्तु प्रयोजनरूपा। एवं च वेदान्तप्रक्रियानुसारं तार्किकशैल्या अतिव्याप्त्यादिदोषरहितत्वेन रसस्वरूपमाविष्करोति जगन्नाथः। एतदर्थमावश्यकान् विशेषान्, **"आनन्दांशावरणस्य अज्ञानस्य निवृत्तिः"**, **"अन्तःकरणधर्माणां साक्षिभास्यत्वम्"** इत्यादीन् विवृण्वानः रसस्य अलौकिकत्वमुपस्थापयति।

तदेतत् सर्वं पूर्वाचार्यसम्मतमिति - इत्थं - च अभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणा चिद्विशिष्टा रत्यादिः स्थायीभावो रस इति स्थितम्। इति प्रकटयति।





किन्तु एतावता पण्डितराजस्य न तृप्तिः। यदा वेदान्तरीत्या रसस्वरूपं विचार्यते तदा **"रसो वै सः"** इति उपनिषद्वचनं प्रमाणत्वेन स्वीकृत्य समालोचनीयमिति -

1. "वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः। सर्वथैव चास्या विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वं च सिद्धम् इति अभिदधानः अस्त्यत्रापि "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इत्यादिश्रुतिः सकलसहृदयप्रत्यक्षं चेति प्रमाणद्वयम्" इति निर्दिशति।
2. एवं प्रथमं मतं निरूप्य पश्चात् भट्टनायकमतं परिशीलयन् - मतस्यैतस्य पूर्वस्मात् मतात् भावकत्वव्यापारान्तरस्वीकार एव विशेषः, भोगस्तु व्यक्तिः। भोगकृत्वं व्यञ्जनादविशिष्टम्। अन्या तु सैव सरणिः इति भेदं प्रदर्शयति। मतमिदं सांख्यमतानुसारि।
3. अनन्तरं नव्यमतमुपस्थापयन् तन्मते सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना अनिर्वचनीयः साक्षिभास्यः शकुन्तलाविषयकरत्यादिरेव रसो भवतीति निर्दिश्य, दोषविशेषकल्पनमत्र प्रधानमिति स्थापयति।
4. अथ परेषाम् मतं प्रस्तुवन् - प्रागुक्तदोषमहिम्नैव अत्रापि रतेरास्वादो भवति, किन्तु अनुमानमप्येतदर्थमङ्गीकरणीयम् इति अस्वारस्यं प्रकटयति।
5. भट्टलोल्लटस्तु - मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य साक्षात्क्रियते इत्यभिप्रैति। तदेतन्मतं मीमांसाशास्त्रसम्बन्धि।
6. श्रीशंकुकमते - दुष्यन्तादिगतो रत्यादिः नटे पक्षे विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः भिन्ने विषये अनुमितिसामग्र्या बलवत्त्वात् अनुमीयमानो रसः। मतमिदं तर्कशास्त्रसम्बन्धि।
7. एवं षण्मतानि उपन्यस्य जगन्नाथः प्रकीर्णं मतपञ्चकं संक्षेपेण निर्दिशति -

7.1. विभावादयः समुदिता- रसः इति कतिपये।

7.2. त्रिषु य एव चमत्कारी स एव रसः अन्यथा त्रयोऽपि न इति बहवः।

7.3. भाव्यमानो विभाव एव रसः इत्यन्ये।

7.4. अनुभवस्तथा इतीतरे।

7.5. व्यभिचार्येव तथा तथा परिणमति इति केचित्।

मतान्येतानि केवलं रसस्वरूपमेव विवृण्वन्ति न तु रसास्वादनप्रक्रियाम्। एते च अभिप्रायाः पण्डितसमाजे प्रचुरिताः भवेयुः। पूर्वोक्तमतवत् कस्यचित् निर्दिष्टस्य पण्डितस्य न भवन्ति। किमपि शास्त्रं नानुसरन्तीति ज्ञायते।

एतादृशमेव आलोचनं कुर्वाणः पण्डितमदनमोहन झा महोदयः रसगङ्गाधरीयस्य चन्द्रिकाव्याख्यायाः प्रस्तावनायाम् अभिप्रैति यत् -

रसविवेचनं दृश्यकाव्यमाध्यमेनैव कर्तुमुचितम्; तत्रैव स्पष्टतया रसानुभवात्।

लोकवृत्तानुकरणं हि नाट्यम्। लोके च बालकानाम् आनन्दानुभूतिकारणानि क्रीडनानि दृश्यकाव्योत्पत्तेः मूलानि भवन्ति। बालकः इष्टं क्रीडनकं दृश्यं वा किमपि प्राप्य हर्षातिरेकपूर्णहृदयः, तमानन्दं बहिः प्रकाशयन्निव कूर्दति नृत्यति च। तं पश्यन्तः अन्येऽपि बालकाः तद्विधमेव आचरन्ति। बालानामयं खेलः सर्वेषां सन्दर्शकानामप्यानन्दं जनयति।

तादृशानाम् मनोरञ्जकानां खेलानामनुकरणेन आनन्दो वर्धते। तदनुकरणमेव दृश्यकाव्यबीजम्। 'अवस्थानुकृतिर्नाट्यम्' भवति।

रसास्वादे प्रथमं कारणं विभावः। यस्य ज्ञानेन रसानुभूतिप्रक्रियायाः आरम्भो भवति। अतः **भाव्यमानो विभावः एव रसः**[6] इति अन्ये चिन्तयन्त आसन्।

विभावगतचेष्टादिद्वारा रसास्वादरीतिः अग्रे सरतीति हेतोः, **'अनुभावस्तथा'**[7] इति इतरे।





विभावस्य शारीरकचेष्टापेक्षया हावभावप्रदर्शनरूपाः मानसिकाः चेष्टाः रसास्वादमाधिक्येन पोषयन्तीति - **"व्यभिचार्येव तथा तथा परिणमति"**[8] इति केचित्।

"विभावानुभावव्यभिचारिणः सम्मिल्य रसपोषकारण"मिति कतिपये अवदन्।

रसानुभवार्थं चमत्कारः अपेक्षित इति तत्प्राधान्येन "त्रिषु य एव चमत्कारी स एव रसः" इति बहवः अभिप्रयन्तः आसन्।

तदेवं सर्वं विचार्य जगन्नाथः भरतरससूत्रं तत्तन्मतपरतया पुनर्व्याख्यातवान् ज्ञातृसौलभ्याय - तत्र तावत् प्रथमे आचार्याभिनवगुप्तमते कल्पनाद्वयानुकूल्येन रससूत्रव्याख्यां एवम् - विभावानुभावव्यभिचारिभिः संयोगात् व्यञ्जनात् रसस्य चिदानन्दविशिष्टस्थाय्यात्मनः, स्थाय्युपहितचिदानन्दात्मनो वा निष्पत्तिः स्वरूपेण प्रकाशनम् इत्याद्ये।

अस्मिन् पक्षद्वये प्रथमः पक्षः मम्मटादीनां बहूनाम् अभिमतः। पण्डितराजस्तु द्वितीयमेव पक्षं संस्तुवन् रसस्य आनन्दरूपस्य परमात्मत्वमुररीकुर्वाणः रसः गङ्गाधर इव इति भावयन् स्वग्रन्थनाम सार्थकमकरोदिति अवगम्यते।

भट्टनायकमते - विभावानुभावव्यभिचारिणां सम्यक् साधारणतया योगात् भावकत्वव्यापारेण भावनाद्, रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशित-स्वात्मानन्दरूपस्य निष्पत्तिः भोगाख्येन साक्षात्कारेण विषयीकृतिः इति द्वितीये।

सांख्यानुयायिमतमिदं जगन्नाथमतस्योपोद्बलकम्।

नव्यमते - विभावानुभावव्यभिचारिणां संयोगात् भावनाविशेषरूपात् दोषाद् रसस्यानिर्वचनीयदुष्यन्तरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः इति तृतीये।

परकीयमते - विभावादीनां संयोगात् ज्ञानात्, रसस्य ज्ञानविशेषात्मनो निष्पत्तिरुत्पत्तिः इति चतुर्थे।

विभावादीनां संबन्धात् रसस्य रत्यादेः निष्पत्तिः आरोपः इति पञ्चमे।

श्रीशङ्कुकमते - विभावादिभिः कृत्रिमैरपि अकृत्रिमतया गृहीतैः संयोगात् अनुमानात् रसस्य रत्यादेः निष्पत्तिः अनुमितिः, नटादौ पक्षे इति शेषः।

कतिपयमते - विभावादीनां त्रयाणां संयोगात् समुदायात् रसनिष्पत्तिः रसपदव्यवहारः इति सप्तमे।

बहूनां मते - विभावादिषु सम्यक् योगात् चमत्कारात् इत्यष्टमे।

एवं सर्वेषां मतानि प्रस्तूय पण्डितराजः रसस्वरूपविचारं समापयन् - इत्थं च नानाजातीयाभिः शेमुषीभिः नानारूपतया अध्यवसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानः, प्रपञ्चेऽस्मिन् रसः रमणीयताम् आवहतीति निर्विवादम्।

**ग्रन्थसूची**

1. काव्यप्रकाशः, भारतीयविद्याभवन, 2013.
2. तैत्तिरीयोपनिषत्
3. रसगङ्गाधरः, चौखम्भा विद्याभवन, वाराणसी, 2015.

**सङ्केतसूची**

1. र. ग. ध. 1.2 ; 2. र. ग. ध. 1.3
3. तैत्तिरीयोपनिषत् २.७.२. ; 4. का. प्र. 4.28.
5. र. ग. ध. पृ.सं.91 ; 6. र. ग. ध. पृ.सं.127
7. र. ग. ध. पृ.सं.127 ; 8. र. ग. ध. पृ.सं.127

**********





# स्वप्नवासवदत्ते नायको नायिका च

डा. नटवरजोशी,
शास्त्रचूडामणिचरः,
क. जे. सोमैयासंस्कृतविद्यापीठम्, मुम्बई।

संस्कृतनाट्यसाहित्यप्रपञ्चे महाकविर्भासो नाम आद्यो नाटककार इति सर्वसम्मतम्। एतस्य नाट्यप्रणयनचातुरी नूनं किमपि लोकोत्तरं सौष्ठवमावहति। भाषा सुमधुरा कोमलपदविन्याशालिनी च। कमनीयकवित्वालङ्कृता रचना च काऽपि निरतिशयचमत्कारिणी। भाषाभङ्गी हृदयङ्गमा। विषयोपन्यासरणिः च अनितरसाधारणी। महाकविनाऽमुना स्वीये नाटकचक्रे काऽप्यपूर्वा रीतिराविष्कृता। सा किल तदनुजातैर्महाकविभिः कालिदासादिभिः अनुसृता। हर्षचरितारम्भे भट्टबाणः भासं प्रशंसमानः-

**सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।**
**सपताकैर्यशो लेभे भासो देवकुलैरिव।।** इति।

तथैव महाकविर्दण्डी भासं प्रशंसते यथा-

**सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।**
**परतोऽपि स्थितो भासः शरीरैरिव नाटकैः।।** इति।

भासविरचितेषु सर्वेषु रूपकेषु स्वप्नवासवदत्ताख्यं नाटकं गुणगरिम्णा परां ख्यातिम् इयाय। तथा हि कविवरो राजशेखरः प्राह-

**भासनाटकचक्रेऽस्मिञ् छेकैः क्षिप्ते परीक्षितुम्।**
**स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः।।** इति।

स्वप्नवासवदत्तं महाकवेः भासस्य प्रदीप्तप्रतिभाखनिप्रसूतं किमपि निरतिशयं भासुरं रत्नम्। आलङ्कारिकैः वामनरामचन्द्राभिनवगुप्तप्रभृतिभिः नाटकादस्मात् उद्धरणादिनास्य प्राशस्त्यम् उद्घोषितम्। अस्य नाटकस्य स्वप्ननाटकम्, स्वप्नवासवदत्ता, स्वप्नवासवदत्तम् इति त्रीणि नामानि समुपलभ्यन्ते। तत्र स्वप्नप्रधानं नाटकमिति आद्यम्, स्वप्नदृष्टा वासवदत्ता इति द्वितीयम्। स्वप्नदृष्टा वासवदत्ता अत्रेति तृतीयं नाम अन्वर्थतया व्युत्पाद्यं भवति।

वत्सराजोदयनस्य वीणावादनकलायां प्रियशिष्या अवनिराजस्य प्रद्योतमहासेनस्य सुता वासवदत्ता निरतिशया प्रियतमाऽऽसीत्। तस्याः रूपगुणशीलादिषु अनुरक्ते राज्ञि राज्यशासनादिषु उदासीनतां गते सति आरुणिनाम्नाऽरिणा राज्यमपहृतम्। राज्यस्य प्रत्यानयनाय यौगन्धरायणनाम्ना मन्त्रिणा युक्तिः विरचिता। मृगयार्थं गते राज्ञि लावाणकग्रामे सञ्जाते अग्नौ वासवदत्ता यौगन्धरायणश्च दग्धाविति वार्ता प्रसारिता। संन्यासिरूपेण यौगन्धरायणेन वासवदत्ता आवन्तिकावेषधारिणीरूपेण मगधराजदर्शकस्य स्वसुः पद्मावत्याः समीपे न्यासरूपेण निक्षिप्ता। प्रियाविरहपीडितोऽपि वत्सराजः पद्मावतीम् उदवहत्। मगधराजदर्शकस्य सहायेन उदयनः स्वराज्यं प्राप्तवान्। अज्ञातवासे पद्मावतीसविधे उषितां वासवदत्तामपि उदयनः प्राप्तवानिति नाटकस्य वस्तु।

**।नायकः।**

नाट्यशास्त्रानुसारेण नायको हि नाटकस्य प्रधानतमं पात्रम्। तल्लक्षणं तु-
**महाप्रबन्धमूलं तु नेता सर्वगुणोपेतः कथाव्यापी स नायकः।।** इति।
दर्पणकारेण उक्तम्-

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता।।** इति।

दशरूपककारोऽपि यथा –

**नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।**
**रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा।।**
**बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।**
**शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः।।**
**भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम्।** इति।

स्वप्नवासवदत्तस्य नायकः धीमान् वत्सराज उदयनः धीरललितः भवति। तल्लक्षणं च –

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।**[1] इति।





वत्सराज उदयनः कुलीनः अनुरक्तलोकः रूपयौवनोत्साहादिगुणोपेतः कलामानसमन्वितः वीणावादनकलानिपुणः मृदुश्च भवति। लावाणकग्रामे वासवदत्ता यौगन्धरायणश्च प्रज्वलिताग्नौ दग्धाविति आकर्ण्य वासवदत्तागतानुरागातिशयात् स्वयमपि अग्नौ प्रवेष्टुकामः रुमण्वानादिमन्त्रिभिः वारितः।

नवविवाहिता रूपशीलमाधुर्यादिगुणोपेता पद्मावती वासवदत्तानुरक्तस्य वत्सराजस्य उदयनस्य मनः हर्तुं न शशाक। सः वदति –

**पद्मावती बहुमता मम रूपशीलमाधुर्यैः।**
**वासवदत्ताबद्धं न तु तावन्मे मनो हरति**[2]।। इति।

वासवदत्तां पुनः पुनः स्मरन् तानि प्रणयचेष्टितानि राजा विदधाति, तैः चेष्टितैः दुःखं नवीभवति। स वदति –
**दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।**
**यात्रा त्वेषा यद्विमुच्येह बाष्पं प्राप्तानृण्या याति बुद्धिः प्रसादम्**[3]।। इति।
यदा महासेनप्रद्योतस्य कञ्चुकीयः वासवदत्ताधात्री च निर्मितं चित्रफलकं विवाहसमये आनयतः तदा वत्सराजः वदति –

**महासेनस्य दुहिता शिष्या देवी च मे प्रिया।**
**कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि**[4]।। इति।

अन्यस्मिन्नपि जन्मनि विस्मर्तुं न शक्यते इति भावः। सर्वमेतत् दर्शयति यत् मृदुहृदयः स वत्सराजः इति। चिरप्रणष्टा वासवदत्तायाः प्रिया घोषवती वीणा समुपलब्धा तदा राजा वदति-
**अस्निग्धाऽसि घोषवति, या तपस्विन्या न स्मरसि।** एवं च-

**चिरप्रसुप्तकामो मे वीणया प्रतिबोधितः।**
**तां तु देवीं पश्यामि यस्या घोषवती प्रिया**[5]।। इति।

**।नायिका।**

नायिकालक्षणम् उक्तं यथा –

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।**
**साऽपि कथिता त्रेधा मुग्धा मध्या प्रगल्भेति।।**
**नायिका नायकगुणसदृशगुणयुक्ता स्यात्।**

**स्वाऽन्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा।।**

**अन्यस्त्री कन्यकोढा च नान्योढाऽङ्गिरसे क्वचित्।** इति।

स्वप्नवासवदत्तस्य नायिका वासवदत्ता रूपगुणशीलादिभिः नायकं वत्सराजमपि अतिशेते। अहो कीदृशः महिष्याः अस्याः श्लाघनीयः त्यागः, यत् पत्युः उत्कर्षार्थमज्ञातवासोऽपि स्वेच्छया स्वीकृतः मन्त्रिणः यौगन्धरायणस्य मन्त्रसाफल्यार्थम्। साऽपि वयसा अल्पीयस्याः राजकुमार्याः पद्मावत्याः सविधे न्यासरूपेण प्रोषितभर्तृका। या च पद्मावती सपत्नी भविता इति जानन्ती न शोकमनुभवति। यदा राजा पद्मावतीम् उद्वहति तदा सा केवलं वदति- **आर्यपुत्रोऽपि नाम परकीयः संवृत्तः**। इति। सपत्नीं पद्मावतीं प्रति अस्याः स्नेहः बहुमानं च न्यूनतां न भजते। अनया अज्ञातवासकाले समस्तोऽपि प्रशस्तः संयमः प्रदर्शितः। सा कदाचिदपि पद्मावतीं प्रति ईर्ष्याभावं न प्रदर्शयति यदा राजा विदूषकं वदति-

**पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।**

**वासवदत्ताबद्धं न तु तावन्मे मनो हरति**[६]।। इति।

एतच्छ्रुत्वा सा वदति-**दत्तं वेतनं परिखेदस्य, अहो! अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते।** इति। पद्मावती यदाऽस्वस्था सञ्जाता तदा वासवदत्ता सखेदं वदति-**अहो! अकरुणाः खल्वीश्वराः मे। विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावती अस्वस्था जाता।** इति। विरहकालेऽपि आभिजात्यमात्मीयं न परित्यजति, अपि च कुलीनतया दौर्भाग्यं सोढमनया। सा पत्युरुत्कर्षार्थं सर्वमपि दुःखं सहमाना सर्वथा प्राशस्त्यमर्हतीति शम्।।

********


**सन्दर्भाः**

१.साहित्यदर्पणः 3.23 ; **२.स्वप्नवासवदत्तम्** – 4.4

३.स्वप्नवासवदत्तम् – 4.6 ; **४.स्वप्नवासवदत्तम्** – 6.11

५.स्वप्नवासवदत्तम् – 6.3 ; **६.स्वप्नवासवदत्तम्** – 4.4


********





# उत्तररामचरिते नायको नायिका च


**-डा. पी. वी. श्रीदेवी,**

**रा. सं. सं. गुरुवायूरपरिसरः।**


महाकविभवभूतिप्रणीतमुत्तररामचरितं सहृदयमनोरञ्जकं भवति। यद्यपि मालतीमाधवं, महावीरचरितं चेति इतररूपकद्वयं तेन विरचितं तथापि उत्तरे रामचरिते भवभूतिर्विशिष्यते। सप्तभिरङ्कैः विरचितेऽस्मिन् नाटके श्रीरामचन्द्रस्य लोकोत्तरं चरित्रं वर्णितम्। उत्तररामचरिते रामायणस्य उत्तरकाण्डकथा कविकल्पनया समुन्नीय प्रस्तुताऽस्ति। चित्रदर्शनं, अदृश्यया सीतया वासन्तीरामचन्द्रयोः कथालापश्रवणं, लवचन्द्रकेतोः युद्धं, रामसमक्षं तस्य चरितस्य अभिनयः, प्राचेतसाश्रमे कौसल्याजनकादीनां सम्मेलनं, वसिष्ठेन सह साक्षात्कारः, रामसमक्षं तदीयचरितस्यैव अभिनयादीनि भवभूतिकृतपरिरवर्तनानि सन्ति।

उत्तररामचरिते चित्रदर्शनं नाम प्रथमोङ्कः अनुपमः। तेन च सीतानिर्वासनस्य भूमिका निबद्धा कविना। सीतापरित्यागानन्तरं शम्बूकवधपर्यन्ता कथा द्वितीयेऽङ्के प्रतिपादिता। तृतीयेऽङ्के पञ्चवट्यां पूर्वपरिचितानि स्थानानि दृष्ट्वा सीताविरहदुःखेन मूर्च्छां प्राप्तं श्रीरामं अदृश्यरूपेणागत्य सीता स्वकरस्पर्शेन समाश्वासयति। चतुर्थेऽङ्के प्राचेतसाश्रमे कौसल्यजनकादीनां सम्मेलनं वर्णितम्। लवचन्द्रकेतुयुद्धं दृश्यते पञ्चमे अङ्के। विद्याधरदम्पतिद्वारा तद्युद्धवर्णना उपलभ्यते षष्ठे। जम्बूकवधानन्तरं युद्धक्षेत्रे श्रीरामस्य आगमनं, तद्वचनेन युद्धस्य परिसमाप्ति इत्यादिकमपि अत्र दृश्यते। लवकुशयोः दर्शनेन तौ सीतापुत्रौ इति सम्भाव्य श्रीरामस्य हृदयं वात्सल्यनिर्भरं जातम्। सप्तमे अङ्के गर्भाङ्कस्य योजना कृता। तेन च सीताश्रीरामयोः समागमः सम्भवति। एवं सुखपर्यवसायि भवति उत्तररामचरितम्। तथापि नाटकेऽस्मिन् करुणरसः आमूलाग्रं परिलसति।

उत्तररामचरितस्य नायकः श्रीरामचन्द्रः नायिका च सीता। नाट्यस्य मुख्यपुरुषकथापात्रं नायकः इत्युच्यते। पुनश्च "त्यागी कृती कुलीनः सुश्रीको

रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्यशीलवान्।।" इति साहित्यदर्पणकारेणोक्तं नायकलक्षणं सर्वं श्रीरामे समन्वेति। लोकहिताय सर्वमपि त्यक्तुं तस्य विमतिर्नास्ति। अत एव प्रथमेऽङ्के - "युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनम् नः।" इति वसिष्ठस्य आदेशं श्रुत्वा एवं वदति -

**"स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**

**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।।"** इति।

**शम्बूकवधे तस्य वीरतां द्रष्टुं शक्यते।** "पौलस्त्यकुलधूमकेतोः महाराजरामस्य" इति सूत्रधारवचनात् तस्य कुलीनत्वं स्पष्टम्। वसिष्ठवचनमपि एतत् प्रमाणीकरोति। तद्यथा -

**"विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते।**

**तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां येषां कुलेषु सविता च गुरुर्वयं च।।"** इति।

**श्रीरामस्य सौन्दर्यं सीतया एव वर्णितम्** "दलन् नीलोत्पलश्यामल स्निग्धमसृण-शोभमानमांसलेन देहसौभाग्येन" इत्यादि।

धीरोदात्तः नायकः भवति श्रीरामः। धीरोदात्तलक्षणं तु "अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः।" इति साहित्यदर्पणे उक्तम्। अविकत्थनः अनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः। निगूढमानो विनयछन्नगर्वः। दृढव्रतः अङ्गीकृतनिर्वाहकः। चित्रदर्शनावसरे यदा लक्ष्मणः मन्थरावृत्तान्तं निर्दिशति, तदा श्रीरामः सत्वरं अन्यत्र दर्शयन् तस्य श्रद्धां अन्यत्र नयति। दुर्मुखवचनात् वैदेह्याः परगृहवासदूषणं अद्भुतैरुपायैः प्रशमितमपि पुनरपि आलर्कं विषमिव सर्वतः प्रसक्तमिति ज्ञात्वा श्रीरामस्य हृदयं दुःखाकुलं जातम्। तथापि धैर्येण तन्निरुध्य स्वकुलस्य महिमां प्रतिष्ठापयितुम् उचितं यत् तत्करोति। एवमेव चित्रदर्शनावसरे स्ववीरतायाः प्रशंसां श्रोतुमपि स न वाञ्छति। अत एव सीता वदति - "सुष्ठु शोभसे आर्यपुत्र! एतेन विनयमाहात्म्येन" इति। यमुनातीरवासिनाम् उग्रतपसां ऋषीणां स्तोमः लवणेन त्रासितः इति श्रुत्वा तस्य उन्मूलनाय शत्रुघ्नं प्रेष्य राजधर्मं निर्वहति रामः।





श्रीरामस्य पितृभक्तिः असामान्या भवति। पितुः प्रतिज्ञापरिपालनार्थं राज्यमपि त्यक्त्वा चतुर्दशवर्षाणि वने यापयति। चित्रदर्शनावसरे स्वपितुः स्मरणया शोकाविष्टचित्तः वदति- "जीवत्सु तातपादेषु नवदारपरिग्रहे। मातृभिश्चिन्त्यमानानां ते हि नो दिवसाः गताः " इति।

आदर्शपूर्णजीवितमासीत् रामस्य। अतः लोकानुरञ्जनार्थं प्राणप्रियां सीतां परित्यज्य स्वयं दुःखमनुभवति सः। द्वितीये अङ्के यज्ञार्थं हिरण्मयीं सीताप्रतिकृतिः गृहिणीकृता श्रीरामेण इति आत्रेय्याः उक्तिं श्रुत्वा वासन्त्याः कथनं तस्य गाम्भीर्यं समर्थयति। तद्यथा - "वज्रादपि कठोराणि मृदूनि कुसुमादपि। लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति।।" इति। अनेन वृत्तान्तेन श्रीरामस्य एकपत्नीव्रतत्वं व्यक्तं भवति। तत्रैव "आर्यपुत्र! इदानीमसि त्वं। अहो उत्खातमिदानीं मे परित्यागशल्यमार्यपुत्रेण इत्युक्ति सीतारामयोः परस्परस्नेहमाविष्करोति। श्रीरामः आदर्शपतिर्भवति। सीतां प्रति तस्य प्रेम अपरिमितमस्ति। तदुक्तम् –

**इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहुलचन्दनरसः।**
**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः।।** इति। श्रीरामः आदर्शपति एवं आदर्शराजः च भवति। द्वयोः कर्तव्ययोः सङ्घर्षे महत्तरस्य कर्तव्यस्य पालनाय अन्यस्य परित्यागः तेन कृतः। सीतानिर्वासनरूपकर्मणा स सम्पूर्णजीवने शोकमनुभवति। स्वयं उक्तं रामेण –

**"चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः**

**कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः।**

**व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः**

**पुराभूत शोको विकलयति मां नूतन इव"।।**

इति एतादृश्यावस्थायामपि तेन स्वकर्म अनुष्ठीयते।

उत्तररामचरितस्य नायकः श्रीरामः दिव्यादिव्यो भवति। द्वितीये अङ्के सकरुणे शूद्रमुनौ प्रहर्तुं दक्षिणं करं व्यापारयन् एवं वदति सः –

**हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य**

**जीवातवे विसृज शूद्रमुनौ कृपाणम्।**

**रामस्य पाणिरसि निर्भरगर्भखिन्नसीताविवासनपटो करुणा कुतस्ते।।**
इति।

अनेन वृत्तान्तेनादिव्यत्वं सूचितम्। "भवतः करेण मन्मरणं, मन्मुक्तिकारणं जातं, असौ ब्राह्मणशिशुः सञ्जीवितः" इति शाम्बूकवाक्यं श्रीरामस्य दिव्यत्वं प्रकाशयति। "मर्मभेदी विधिप्रहारं करोति, किन्तु जीवनं न छिनत्ति।" "दुःखसंवेदनायैव रामे चैतन्यमागतम्" इत्यादीनि वाक्यानि तस्य अदिव्यत्वं च सूचयन्ति।

यद्यपि कर्तव्यनिर्वहणे कठिनः तथापि तस्य हृदयं अतिमृदु भवति। पञ्चवट्यां पूर्वपरिचितान् प्रदेशान् दृष्ट्वा स सीतायाः स्मरणेन मूर्च्छां प्राप्नोति। युद्धभूमौ लवकुशौ दृष्ट्वा तस्य हृदयं वात्सल्यपूरितं जातम्। तयोः आश्लेषः हिमच्योतमिव तस्य मनसि प्रतीयते। एवं वक्तुं शक्यते यत् उत्तररामचरितस्य नायकः आदर्शराजः, आदर्शपिता, आदर्शपति च भवति। उत्तररामचरिते श्रीरामः न केवलं विग्रहवान् धर्मः, किन्तु विग्रहवान् करुणरसोऽप्यस्ति। सत्यमुक्तम् आलङ्कारिकैः यत् "रामादिवत् वर्तितव्यं, न रावणादिवत्" इति ज्ञानं काव्यादेव जायते इति।

उत्तररामचरितस्य नायिका सीता मुग्धा एवं पतिव्रता भवति। रामं प्रति सीतायाः मनसि अगाधप्रेम विद्यते। अत एवोच्यते प्रथमेऽङ्के "भवतु, तस्मै कोपयिष्यामि, यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि" इति।

सीतायाः पवित्रता कुलीनता च नाटकेऽस्मिन् सम्यक् प्रतिपादिते। प्रथमेऽङ्के श्रीरामस्योक्तिः तत्र प्रमाणम्। तद्यथा - "जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम्। यां देवयजने पुण्ये पुण्यशीलामजीजनः।।" इति।

सीतायाः सर्वमपि रामस्य प्रियं भवति, केवलं तस्याः विरहः एव अप्रियम्। तृतीयेऽङ्के यदा वासन्ती "अयि! कठोर! यशः किल ते प्रियम्" इति श्रीरामं दूषयति तदा "सखि वासन्ती त्वमेव दारुणा च यैवं प्रलपन्तं प्रलापयसि" इति सरोषं वदति। वाक्यमिदं तस्याः स्नेहस्य तीव्रतां प्रकाशयति। यद्यपि रामं प्रति अतिगाढं स्नेह आसीत् तथापि निष्कारणपरित्यागविषये ईर्ष्याऽप्यस्ति तस्याः। "दिष्ट्या अपरिहीनराजधर्मः स राजा" इति वचनेन तत्सूचितं च। किन्तु





प्रभातकाले चन्द्रमण्डलमिव आपाण्डुरं परिक्षामं दुर्बलं रामशरीरं दृष्ट्वा सीता मूर्च्छति। उत्तररामचरिते आमूलाग्रं सीतारामयोः परस्परप्रीतिः प्रत्यक्षेण परोक्षेण वा द्रष्टुं शक्यते। अत एव उच्यते -

तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेवं जानाति प्रीतियोगं परस्परम्।। इति।

मन्दभागिनी सीता न केवलं भर्तृविरहं, किन्तु पुत्रविरहमपि अनुभवति। स्तन्यत्यागात्परं द्वौ पुत्रौ प्राचेतसाश्रमे पोषितौ। सीतायाः क्षमा अनुपमा भवति। सप्तमेऽङ्के पृथिव्याः उक्तिः इदं प्रकाशयति। तद्यथा-"सोढश्चिरं राक्षसमध्यवासस्त्यागे द्वितीयस्तु सुदुःसहोऽस्याः।।" इति। उत्तररामचरितस्य नायिका सीता त्यागस्य, प्रेम्णः, पातिव्रत्यस्य, करुणरसस्य च मूर्तिरिव प्रतीयते। एवं भवभूतेः सीता एका आदर्शवनिता भवति। सीतावद् वर्तितव्यम्, न शूर्पणखावदित्युपदेशः रामायणदृष्ट्या कल्पनीय एव।।

*********

# वेणीसंहारे नायको नायिका च

- प्रो. राजन् ई. एम्. ,
साहित्यविभागाध्यक्षः,
क. जे. सोमैया. सं. विद्यापीठम्, मुम्बई।

**गुरवे सर्वलोकानां भिषजे भवरोगिणां**
**निधये सर्वविद्यानां दक्षिणामूर्तये नमः।।**

महाकविना भट्टनारायणेन विरचितं 'वेणीसंहारा'ख्यन्नाटकम् इतरनाटकापेक्षया सर्वाङ्गिणं सौन्दर्यमावहति। तत्र मुख्यङ्कारणन्तत्रस्थनायकस्य सन्निवेश एव। नाम्नि भट्टपादश्रवणादयङ्कविर्ब्राह्मण इति निश्चप्रचम्। न च प्रस्तावनाया'**ङ्कवेर्मृगराजलक्ष्मण**'[१] इति श्रवणादयं क्षत्रिय इति वाच्यमयङ्केनापि दत्त उपाधिस्स्याद्यथा पण्डितराज इति। आलङ्कारिकेणानन्दवर्धनेन, महिमभट्टेन, धनञ्जयेन, भोजराजेन च भट्टनारायणः स्मृतः, परङ्कविना भट्टबाणेन हर्षचरिते बहवः कवयः स्मृतास्तेषु भट्टनारायणो नास्तीति कवेरस्य भट्टनारायणस्य काल अष्टमश्शताब्द इति। भट्टनारायणः स्वीयं ग्रन्थान्तरं न परामृशति अन्येऽपि नेति एकमेव नाटकन्तेन कृतन्तद्वेणीसंहारम्।।

***नाटकस्येतिवृत्तम्*** -- वेणीसंहारनाटकस्येतिवृत्तमधिगत्यैवात्र कः नायकः का नायिकेत्यवगन्तुं शक्यम्। वेणयः केशास्संह्रियन्तेऽनुबध्यन्तेऽस्मिन्निति वेणीसंहारम्। एतत्संहरणं भीमकर्तृकमत एवान्ते निर्वहणसन्धौ भीमो पाञ्चालीं वदति-'**संहरामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुश्शासनाकृष्टं केशहस्तम्**'[२] अथ पाञ्चाली वदति- '**नाथ विस्मृतास्म्येनं व्यापारम्। नाथस्य प्रसादेन पुनरपि शिक्षिष्ये**'[३] (भीमसेनो वेणीं बध्नाति)। द्यूते दासीत्वमापन्नायाः द्रौपत्याः वसनकेशानाकृष्य दुश्शासनस्तां दुर्योधनसभायामपमानितवान्। तदा पाञ्चाली केशानुन्मुच्य प्रतिज्ञाङ्करोति '**यदिमे केशाः यावद्दुश्शासनरुधिरेण बद्धा न भवेयुस्तावन्न बद्ध्नामी**'ति। एतस्याः प्रतिज्ञायाः पूर्तिं भीमः करोति।एषैवास्य नाटकस्योपजीव्यकथा महाभारतस्योद्योगपर्वणि वर्तते। वेणीसंहारे नायके विमतिरस्ति परं नायिका





द्रौपतीत्यत्र नास्ति विप्रतिपत्तिः। नायके केचन वदन्ति दुर्योधन इति,कतिचन युधिष्ठिर इत्यपरे भीमसेन इति अत एतेषां चरित्रचित्रणं विधेयम्।।

***दुर्योधनः***-- यद्यप्ययं दुर्योधनः नायकानुगुण वीर-शौर्य-दाक्षिण्यादिगुणी तथाप्येषोऽविनीतः दुराचारमग्नोऽनवरतप्रवृत्तश्रृंगारत्वादनुचितकारी। सत्यामपि भानुमत्यां पाण्डवेषु परिहासकरणे कारणं दुर्योधन इति सहदेवो वक्ति यथा-

**" स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि।**
**मधुरापि मूर्च्छयते विषविटपिसमाश्रिता वल्ली "**।।[४]

द्वितीयाङ्के दुर्योधनः तुमुले युद्धे प्रवृत्ते प्रियया भानुमत्या सह रमते। स्वप्नदर्शनेनातिखिन्ना गन्तुमुत्सुकते परं दुर्योधनो नानुमन्यते यथा-
'**आर्यपुत्र अतिमात्रं मां शङ्कां बाधते तदनुमन्यतां मामार्यपुत्र**'[५] इति।
सात्त्विकगुणा अपि सन्ति दुर्योधने। तथा हि मारिततातमश्वत्थामानं दृष्ट्वा दुर्योधन आह-

**"एह्यस्मदर्थहततात परिष्वजस्व क्लान्तैरिदं मम निरन्तरमङ्गमङ्गैः।**
**स्पर्शस्तवैष भुजयोस्सदृशः पितुस्ते शोकोऽपि यो वहति निर्वृतिमादधाति"**[६]।।

एवं कर्णो मृत इति ज्ञात्वा दुर्योधनः – '**हा वयस्य कर्ण** ' इति वदन्मोहमुपगच्छति। पुनस्स वदति-

**"मम प्राणाधिके तस्मिन् अङ्गानामधिपे हते**
**उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा"** [७]।। इति।

पञ्चमाङ्के धृतराष्ट्रगान्धार्योः वचनानुगुणं दुर्योधनस्य स्वभावोऽनुकूल एव। अपि च प्रायेण सर्वेष्वङ्केषु दुर्योधनस्य चरित्रमुपवर्णितमिति अङ्कलक्षणानुसारमपि कथञ्चिद्दुर्योधनो नायको भवितुमर्हतीति प्रथमपक्षः। किन्तु विशेषतः दुर्योधने नायकानुगुणगुणाः न सन्ति दोषाणामाधिक्यादतः प्रतिपक्षकोटावेव दुर्योधनस्य स्थानमुचितम्।।

***युधिष्ठिरः*** – केचन वदन्ति युधिष्ठिरोऽत्र नायक इति। तेषामिमाः युक्तयः- यत्पाण्डवेषु ज्येष्ठो युधिष्ठिरः यन्महाभारतयुद्धं जातं तत्तस्य राजपदमवाप्तुमेव तत्र प्रासङ्गिकाः अन्ये कथांशाः भवन्ति। एतत् भगवान् श्रीकृष्णः युधिष्ठिरं सम्बुध्य – '**महाराज युधिष्ठिर !** इति वदन् अग्रे वदति–एते **खलु भगवन्तो**

**व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः मागधकुलसम्भवाश्च राजकुमाराः .....कलशास्तवाभिषेकं कारयन्तीति'**[८] अपि च धीरोदात्तनायकस्य केचन गुणा अपि युधिष्ठिरे सन्ति। एतावतायं नायकपदवीमारोढुं नार्हति। यतो हि प्रत्यङ्कं नायकचरित्रं भवेदिति अङ्कलक्षणम्। एतन्न युधिष्ठिरे घटते। प्रथमाङ्के भीमसहदेवाभ्यां परामृष्टः युधिष्ठिरः पुनस्तृतीयाङ्के परामृष्टः मध्ये द्वितीये त्यक्तः। तृतीये पुनः **'अश्वत्थामा हत इति पृथासूनुने'**[९] ति परामृष्टः, चतुर्थाङ्के त्यजन् पञ्चमे स्मरति नेपथ्येन यथा – **'एष खलु श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाह्वयती'ति**[१०]। पुनरन्तिमे षष्ठाङ्के युधिष्ठिरः रङ्गं प्रविशति। प्रथमाङ्के प्रचण्डः भीमः युधिष्ठिराय क्रुध्यति-**'सन्धिं करोतु भवतां नृपतिः पणेन..'**[११] इति। युधिष्ठिरो नायकश्चेदीदृशं वचनं तस्मिन्न शोभते। अतः न नायको युधिष्ठिरः।।

***भीमसेनः*:**– धीरोद्धतनायकं नाटकं वेणीसंहारं विहाय चण्डकौशिकप्रभृतीनि द्वित्राणि स्युः।धीरोद्धतस्य लक्षणं यथा साहित्यदर्पणे यथा-

**"मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः"**[१२]।।

प्रचण्डस्तु अत्यन्तकोपनः इति कोशानुसारेण अतिकोपनः धीरोद्धतो भवेत्। अत्र नाटके प्रथमाङ्क एव प्रचण्डत्वमुत्तरोत्तरं भीमसेने कविना निर्व्यूढम्। तथा हि अद्य प्रभृति भिन्नोऽहं भवद्भ्यः इति वदन् भीमो वदति –

**"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभिः**
**न तत्रार्यो हेतुर्न भवति किरीटी न च युवा।**
**जरासन्धस्योरस्थलमिव विरूढं पुनरपि**
**क्रुधा सन्धिं भीमो विघटयति यूयं घटयत"**[१३]।।

**इतोऽप्यग्रे ओजो यथा –**

**"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां**
**वने व्याधैस्सार्थं सुचिरमुषितं वल्कलधरैः।**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतं**
**गुरुर्खेदं खिन्ने मयि भजति नाद्यापि कुरुषु"**[१४]।।





उभयत्राहङ्कारोऽपि प्रतीयते- एवमुत्तरोत्तरमभिवृद्धिं प्राप्तमोजः तस्य पराकाष्ठा प्राप्नोति यथा –

**"चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य।**
**स्त्यानावबद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः"**[१५]।।

अत्र अहङ्कारदर्पात्मश्लाघाः प्रतीयन्ते। एवं सामान्येन भीमे धीरोद्धतत्वं प्रतिपाद्य नायकानुगुणं सर्वाङ्केषु भीमपरामर्शः विधीयते।।

द्वितीयाङ्के भीमस्य चरितं यथा।दुर्योधनस्य कञ्चुकी प्रविश्य वदति **'देव भग्नं भग्नम्'**।राजा- (दुर्योधनः) **'केन?'**। कञ्चुकी- **'देव भीमेन'**। राजा- **'कस्य ?'**।कञ्चुकी-**'भवतः'**। राजा – **'किं प्रलपसि?'**[१६]। अत्र दुर्योधनेन भीमः स्मर्यते। पुनस्तत्रैव यथा –

**"धर्मात्मजं प्रति यमौ च कथैव नास्ति मध्ये वृकोदरकिरीटभृतोर्बलेन..."**[१७]।

तृतीये राक्षसः वसागन्धिमाह–

**'अरे वसागन्धे ननु पुत्रघटोत्कचशोकसन्तप्तहृदयां हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि'** (वे. सं. ३. प्रवेशकः)। पुनस्तत्रैव **'नरकरिपुणा सार्धं तेषां सभीमकिरीटिनाम्'**[१८] इति। चतुर्थाङ्कस्यारम्भ एव सूतो भीमसेनं स्मरति यथा- **'निहतदुःश्शासनपीतावशेष शोणितस्नपितबीभत्सवेषवृकोदरे'**त्यादि। पुनः भीमसेनस्य वाक्यं नेपथ्यात् श्रावयति यथा **'भो भो अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः'** इत्यारभ्य –

**"राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः**
**प्रत्यक्षं कुरु बान्धवस्य मिषतः कर्णस्य शल्यस्य च।**
**पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः**
**कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः"**[१९]।।

पुनस्सूतस्य वाक्ये यथा – **'एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया'**[२०] इति। पुनस्तत्रैव दुर्योधनः **'दौश्शासनीं यदहमाशु वृकोदरो वा'**[२१] इत्येवं तत्र तत्र भीमः परामृष्टः। पञ्चमाङ्के दुर्योधनः पितरौ धनञ्जयश्च वक्ति–

**'....तं दुश्शासनशोणिताशनमरिं भिन्नं गदाकोटिना भीमं न विक्षिपामि......'**[२२] इत्येवम्।, पुनस्तत्रैव धृतराष्ट्रः दुर्योधनमाह'**....द्रवति हृदयमेदद्भीम- मुत्प्रेक्ष्य**

**भीमम्**"[२३] इति। पुनः सूतः भीमसेनस्य प्रवेशमाह '....**स च क्रूरो** वृककर्मा **वृकोदर**'[२४] इति, अत्र वृकोदर इति भीमस्य पर्यायान्तरम्। ततः परं साक्षात् **भीमसेनः प्रविशति।**

**षष्ठाङ्के** भीमस्य प्रतिज्ञानिर्वहणमिति सोऽवश्यं भवेदिति किमु वक्तव्यम् ? अत्रादौ पाञ्चालकः युधिष्ठिरं द्रौपदीं च प्रति भीमस्य युद्धपाटवादिं प्रतिपादयति। पुनः दुर्योधनचारस्य राक्षसस्य संवादानन्तरं भीमसेनः प्रविश्य वदति – **'भो भोः समन्तपञ्चकसञ्चारिणः सैनिकाः!**

**"नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं**
**निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनःक्षत्रियोऽस्मि।**
**भो भोः राजन्यवीराः!समरशिखि शिखादग्धशेषाःकृतं व-**
**स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्**"[२५]।।

एवमेवं वदन् पाञ्चालीमुपेत्य **चञ्चद्भुजेत्यादि......** प्रथमाङ्कगतां प्रतिज्ञां स्मारयन् **पाञ्चाल्याः वेणीं बध्नाति।।**

इत्थं नाटकसंज्ञामवलम्ब्य प्रत्यङ्कं भीमसेनस्य चरित्रचित्रणमवलम्ब्य धीरोद्धत-नायकस्य लक्षणानुसारेण च भीम एव वेणीसंहारे नायकः।।

**नायिका—वेणीसंहारे** नायिका द्रौपदी। द्रुपदमहाराजस्यापत्यमिति नामान्वर्थज्ञातम्। एषा पाञ्चाली, याज्ञसेनी,कृष्णेत्यपरनामभिः व्यवह्रियते। नायिका त्रिविधा तदुक्तं दर्पणे **"अथ नायिका त्रिभेदा स्वान्या साधारणा स्त्रीति**"[२६] । एतेषु भेदेष्वियं स्वा भवति। स्वा नाम स्वीया। तस्याः लक्षणम्-

**"विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया**"[२७]। इति।।

तत्र तृतीयाङ्के सा सविनयं सखीं बुद्धिमतिकामाह – **'भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत्**'[२८] । पाञ्चाली प्रियपतिं भीमं दिदृक्षुरपि त्वरया तत्समीपं न गच्छति, वदति च **'तदेकान्त उपविष्टा भूत्वा श्रृणुमस्तावन्नाथस्य व्यवसितमि'**ति[२९] । एषा पतिव्रता यतः भीमार्जुनौ मृतौविति दुर्योधनचारस्य गृहीतकपटसन्न्यासवेषस्य राक्षसस्यालीकवचनं श्रुत्वा सतीव्रतमनुष्ठातुं चिकीर्षति तत्र चेटी आह **द्वावपि** (युधिष्ठिरः पाञ्चाली च) **शरीरेण निष्करुणज्वलनस्य प्रवेशेनेन्धनी-भवतः**[३०]। पाञ्चाली यद्यप्यात्मना विमुक्तवेणीं बद्धुम्ातुं जानाति





तथापि दुश्शासनरक्तमसृणपाणिना वेणीवन्धः भवत्विति धिया भीमं वदति – **नाथ! विस्मृतास्मयेनं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्येति**[३१] । पाञ्चाली वहुषु कार्येषु नायकं भीममनुसरति तथा च नायकसामान्यगुणैर्भवतीत्यंश अपि पाञ्चाल्यां घटते तदत्र विस्तरभयान्नोच्यते।

**सन्दर्भाः**


१.वे.सं.पृ.सं१४
२.वे.सं.पृ.सं ३७६
३.वे.सं.पृ.सं ३७८
४.वे. सं. १.२०
५.वे. सं. पृ. सं. ७७
६.वे.सं.३.२९
७.वे.सं. ५.१५
८.वे. सं. पृ. सं. ३८२
९.वे.सं. ३. ११
१०.वे.सं.पृ.सं२८८
११.वे.सं.१.१५
१२.सा.द.३.३३
१३. वे. सं. १.१०
१४.वे. सं. १.११
१५.वे. सं. १.२१
१६.वे.सं.पृ.सं ११८
१७.वे. सं. २.२६
१८. वे. सं. ३. २४
१९.वे. सं. ४. १
२०.वे. सं. ४.४
२१.वे.सं. ४.८
२२.वे.सं. ५. ७

२३.वे.सं. ५.२१
२४.वे.सं. ५.२५
२५.वे. सं. ६.३७
२६.सा. द. ३.५६
२७.सा.द. ५.५७
२८.वे. सं. पृ .सं. ४२
२९.वे. सं. पृ. सं. ४३
३०.वे.सं..पृ.सं. ३५७
३१.वे. सं. पृ. सं. ३७८

**उद्धृतग्रन्थसूचिका**

**१.वेणीसंहारनाटकम्** – (प्रकाशक भारतीयविद्याप्रकाशन दिल्ली)।
**२.साहित्यदर्पणः**।

*********





# राष्ट्रं रक्षति रक्षिते नायकः

-डा. सुशान्तकुमारराजः,
सहाचार्यः, साहित्यविभागः,
श्रीसदाशिवपरिसरः पुरी, ओडिशा।

**या सृष्टेः सृष्टिदात्री भूवनतलचरप्राणिनां प्राणदात्री**
**ज्ञानध्यानप्रदात्री परमकरुणया या सदौचित्यकर्त्री।**
**सन्त्रासातङ्कहन्त्री निखिलजनकृते या सदानन्ददात्री**
**तां वन्दे क्रान्तिदात्रीमसमबलवतीं भारतीं विश्वदात्रीम्।।**[1]

अस्माकं भारतराष्ट्रं यदा जागरुकैरस्माभिः देशरक्षणतत्परैः सर्वैः नागरिकैः रक्षितं पोषितञ्च भवति, तदा राष्ट्रमपि अस्मान् सर्वान् स्वसम्पद्भिः संसाधनैश्च सर्वदा सम्यक् रक्षतीति नाटकाभिधानस्य सफलाभिप्रायो वर्तते। अत एव भरतवाक्यमेवं लिखितम् –

**स्यामो जागरुकास्सर्वे स्वराष्ट्रे राष्ट्रिया वयम्।**
**समृद्धं शक्तिमद्राष्ट्रं रक्षितं रक्षकं स्वयम्।।**
**राष्ट्रं चेद्रक्षितं सर्वे सुरक्षिताः न चिन्तिताः।**
**त्रितापातङ्कितान् सर्वान् राष्ट्रं रक्षति रक्षितम्।।** इति।

सर्वे जानिमहे वयं यत् दृश्यश्रव्यत्वभेदेन विभाजितेषु काव्यसमुदायेषु दृश्यकाव्यस्य प्राधान्यं सर्वैरङ्गीक्रियते। श्रव्यकाव्यस्याध्ययनं स्वयं क्रियतेऽथवा कस्यचिन्मुखादेव श्रूयते, परन्तु दृश्यकाव्यानां न केवलं श्रवणं भवति अपि तु तेषां काव्यानां लोकव्यवहारानुरूपप्रदर्शनमपि सम्पद्यते इत्यपि विदितचरमस्ति। दृश्यकाव्यनि तु आङ्गिकवाचिकाहार्यसात्त्विकाभिनयमाध्यमेन सहृदय-समाजिकानां हृदयारविन्दानन्ददायकतया प्रदर्श्यन्ते। ततः सामाजिकाः सत्वरमेव रसब्रह्मानन्दमये संसारे प्रविष्टाः सन्तः परमानन्दमनुभवन्ति। दृश्यकाव्यं हि न केवलं जनेभ्ये रसास्वादं प्रददाति अपि तु असहृदयान् सहृदयान् कारयति, अरसिकान् रसतरङ्गिण्यां अवगाहयति, सेसारमसारंमन्यमानानाम्

जनानां कृते परमानन्दप्राप्तये मार्गं प्रदर्शयति इति कृत्वा कथ्यते – **काव्येषु नाटकं रम्यम्** इति। अत्र नाटकमिति रुपककाव्यस्योपलक्षणमिति ज्ञातव्यम्।

## नेता

नी धातोः तृच् प्रत्यययोगेन नेतृशब्दस्य निष्पत्तिर्भवति, यस्यार्थो भवति अग्रेसारकः कार्यनिर्वाहको नायको वेति। नायको भवति नाटकस्य मुख्यपात्रम्, यः नाटकस्य कथावस्तु नाट्यान्तःपर्यन्तं प्रसारयति। नेता नाटकस्य फलभोक्तृरुपेणापि अङ्गीक्रियते। अयं नेता विविधगुणसम्पन्नो भवतीति शास्त्रकाराणामभिप्रायोऽस्ति। सामान्यतः स विनीतो, मधुरभाषी, त्यागी, उत्तमकुलसम्पन्नः, वाग्मी, समुत्साही च भवेत्। यथोक्तं धनञ्जयेन-

**नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।**
**रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा।।**
**बृद्धयुत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।**
**शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः।।**[2] इति।

काव्यनायकस्य लक्षणं साहित्यदर्पणे विश्वनाथकविराजेनापि सुस्पष्टतया निरुपितं यथा –

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्यशीलवान्नेता।।**[3] इति।

अयं नायकः चतुर्विधः अस्ति। तदुक्तं विश्वनाथकविराजेन् साहित्यदर्पणे –

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः।।**[4]इति।

राष्ट्रं रक्षति रक्षितमिति नाटकेऽपि यद्यपि कालभैरव-क्रान्तिवीर-शान्तिवीर-धर्मराज-खॉनसाहेबप्रमुखानि प्रमुखपात्राणि सन्ति। तथापि उपर्युक्ताः प्रायतः सर्वे गुणाः क्रन्तिवीरे एव तिष्ठन्ति। सर्वोत्तम-गुणसम्पन्नोऽयं क्रान्तिवीरः प्रख्यातवंशसम्भवस्तथा प्रवलप्रतापी वीरोऽस्ति। स्वदेशरक्षणार्थं स्वगृहमपि त्यजतीति तस्य त्यागमनोभावः प्रकटितः। मातुस्समीपे प्रतिज्ञाबद्धो क्रान्तिवीरो वदति – **मातः! जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। जन्मभूमेः** रक्षानिमित्तं पुत्रस्य कृते केवलं तव आशीर्वादः अपेक्षते। यस्य आशीर्वादस्य वलेन विषमपरीक्षायाः अस्याः सम्मुखीभूत्वा सगौरवं सफलो भविष्यामि। इति।।

क्रान्तिवीरोऽयं यथा रूपयौवनोत्साही तथैव बुद्धिसम्पन्नोऽप्यस्ति। निरलसतया स्वकार्यनिर्वहणे यथा निपुणः तथैव सफलोऽप्यस्ति। आतङ्कवादातङ्ककरणे यथा तेजोवान्। तथैव शीलवानप्यस्ति। अतः आचार्यधनञ्जयोक्ताः कविराजविश्वनाथोक्ताश्च नायकोद्दिष्टाः सर्वे एव गुणाः अस्मिन् क्रान्तिवीरे समुपलक्ष्यन्ते।।

सामान्यतः क्रान्तिवीरे विद्यमानाः गुणाः उक्ताः, तथापि चतुर्विधनायकेषु अयं क्रान्तिवीरः धीरोदात्तः। तत्रापि अनुकूल नायकः। नायकः क्रान्तिवीरः न कदापि आत्मप्रशंसां करोताति अस्य प्रमुखं वैशिष्ट्यं वर्तते। क्षमागुणसम्पन्नोऽयं गम्भीरस्तथा हर्षशोकादिभिरनभिभूतचित्तोऽस्ति। विस्फोटनाद्यातङ्कर्मणि मिथ्यारोपवेलायां महासत्त्वोऽयं क्रान्तिवीरः स्वाभिप्रायं प्रकटीकरोति यत् –

**यदा कश्चिद्धूर्तो निवहति धरारक्षणबलम्।**
**तदाऽऽक्रान्तास्सर्वे, भवति जनता भाग्यविफला।**
**न मित्रं पुत्रो वा प्रभवति विकर्मान्तसमये**
**सदाऽऽकान्तः कालः कलयति कलाकर्मकुफलम्।।**[5] इति।

अत्यन्तं विपदि पतितेऽप्ययं नेता न कदापि अस्थिरचित्तवान् भवति। कालभैरवस्य समीपे स्वपितुः समीपे च अत्यन्तं विनयसम्पन्नोऽयं क्रान्तिवीरः। अतः निगूढमानोऽयं नेता इत्यत्र नास्ति कापि विप्रतिपत्तिः।।

सर्वोपरि अयं नायकः सर्वदा दृढव्रतोऽस्ति। अनेन नाट्यारम्भे अङ्गीकृता प्रतिज्ञा सफलतया पालिता। सा प्रतिज्ञा यथा – **मातः प्रतिज्ञाबद्धोऽस्मि यत् ये ये अधर्माभिभूता जनाः साम्प्रदायिकतावादस्य समर्थनं कृत्वा परिवारं मे व्यापादितवन्तः ये ये समग्रभारतवर्षे साधारणजनजीवनं त्रासयन्ति, ये के च स्वकीयान्यायसाम्राज्यविस्ताराय प्रयत्नशीला भवन्ति, तान् सर्वान् एकम् एकं कृत्वा विनाशयिष्यामि।**[6] इति। विषमपरिस्थितौ अपि तेन मातुस्समीपे स्वाभिप्रायः प्रकटीकृतो यथा – **मातः तव विश्वासो न कदापि**

**विफलो भविष्यति। सत्यस्यैव विजयो भविष्यति। अवश्यं सत्यस्य** एव विजयो **भविष्यति।** इति।।

किञ्च **नाट्यशास्त्रीयसिद्धान्तानुसारेण** नायको भवति नाटकस्य प्रमुखफलभक्। तदनुसारेण क्रान्तिवीरः अस्य **राष्ट्रं रक्षति रक्षितम्** इति नाटकस्य प्रधाननायकः, यः मुख्यफलभागस्ति। राष्ट्रं निर्मलं स्वच्छं आतङ्कवादादिरहतं तथा कुत्सितसाम्प्रदायिकतावादविहिनं च भवेदिति तस्य परमं लक्ष्यमस्तिष तल्लक्ष्यं नाटकान्ते साधितं भवतीति कृत्वा नायकः नाटकस्य फलभाक् जातः।।

अपि च धीरोदत्तनायकोऽयं क्रान्तिवीरः एकया नायिकया सह सम्पर्कं स्थापयति। तया सह तस्य विवाहोऽपि सम्पन्नोऽस्ति। अतोऽयम् अनुकूलनायकरूपेणापि अङ्गीक्रियते।।

एतद्यतिरिक्तानां पताकानायक-पीठमर्द-नेतृसहकारिप्रमुखानाञ्च वर्णनमपि प्राप्यते। किञ्च नायकस्य विरुद्धाचरणशीलः प्रतिनायकोऽपि नाट्यशास्त्रपरम्परायां व्यवह्रियते। प्रकृतनाटकेपि क्रान्तिवीरः धीरोदात्तो नायकः, अधर्मराजः मुख्यखलनायकः, कालभैरवः पताकानायकश्च कल्पिताः। एतस्मिन् **राष्ट्रं रक्षति रक्षितम्** इति नाटके नायिकायाः तावन्महत्त्वं नास्तीति विचारो न विहितः।

**सन्दर्भाः**

1. रा.र.र. – नान्दीपद्यम्।
2. द.रू. – 2/1/2
3. सा.द. – 3/30
4. सा.द. – 3/31
5. रा.र.र. – पृ.82
6. रा.र.र. – पृ.81

**ग्रन्थसूची**

१.राष्ट्रं रक्षति रक्षितम्, २.दशरूपकम्
३.साहित्यदर्पणः।

*************





# कुहनाभैक्षवप्रहसने नायको नायिका च

-डा. नारायणन्, ई. आर्.[1]

**मङ्गलाचरणम्**

दक्षाधःकरपङ्कजे रवमयीं वीणां वहन्तीं सदा
दक्षोर्ध्वे जपमालिकां मणिगणैराभूषिताङ्गां वराम्।
वामाधःकरसम्भृताखिलपराविद्यासुपुस्तान्वितां
सुस्मेरस्फुटिताधरां सुनयनां वाचामधीशां भजे।।[2]

**उपोद्घातः**

कुहनाभैक्षवाख्यं किञ्चित् प्रहसनं बोम्मगण्टिगङ्गाधरसुततिरुमलनाथकृतिष्वन्यतमं अर्थलिप्सया धर्मश्रवणादिविमुखानां भिक्षूणां परिहासार्थं रूपकविषयीकृतं तावदत्र निरीक्षामहे। प्रस्थानेऽस्मिन् विद्धशालभञ्जिकामत्तविलासादीनि सहृदयैः परिशीलित-पूर्वाण्यपि तु राष्ट्रियसंस्कृतसंस्थाने सहृदयान्तराणामलङ्कारशास्त्रशुश्रूषुतयाऽध्येतॄणां विशिष्य साहित्यविभागे समधीयानानामस्मच्छिष्याणामामोदार्थं संकलितमिदं निरीक्षणं मन्ये समेषां सरस्वतीकटाक्षपात्राय प्रकल्पतइति। प्रहसनेऽस्मिंस्तावल्लक्ष्ये नाट्यशास्त्र-दशरूपकसाहित्यदर्पणादितल्लक्षणग्रन्थस्वारस्येन निरीक्षणमुपकल्पयामः। तदुपक्रमे कुहना-भैक्षवपदनिष्पत्तिः, रूपकपात्रपरिचयः, कुहनाभैक्षवस्येतिवृत्तम्, रूपकपात्रवैशिष्ट्यम्, प्रहसनलक्षणम्, लक्षणस्य लक्ष्यसमन्वयः, नायिकानायकवैशिष्ट्यम्, रूपकन्तरसंवादश्चेति नैकानत्र विषयान् संक्षिपामः।

**कुहनाभैक्षवपदस्य निष्पत्तिः**

---

1. वरीयान् सहायकाचार्यः, साहित्यविभागः, रा.सं.सं. क.जे. सोमैयासंस्कृत-विद्यापीठम्, विद्याविहारः, मुम्बई-४०००७७.

2मदीये सरस्वत्यष्टके। .

कुह विस्मायने, चुरादिरात्मनेभाषः, सकर्मकः, सेट्। कुहयते विस्मापयति। विस्मायनमन्यतो विस्मयोत्पादनम्। कुह इत्यतो ण्यासश्रन्थो युच्[1] इति युचि कुहना। दम्भचर्या इति मेदिनी। लोभान्मिथ्येर्यापथकल्पना इत्यमरः। अर्थलिप्सया मिथ्याचारभेदस्य सम्पादना। दम्भमात्रकृतध्यानमौनादिः। अर्थलिप्सया धर्माश्रवण-मिति भरतः। भिक्षूणां समूहो भैक्षवः। ओरञ्। अणोऽपवादः। कुहनया दम्भचर्यया लोभान्मिथ्येर्यापथकल्पनया वा, अर्थलिप्सया, मिथ्याचारभेदस्य सम्पादनया दम्भमात्रकृतध्यानमौनादिना वा, अर्थलिप्सया धर्माश्रवणेन युक्ता ये भिक्षवस्तेषां समूहो कुहनाभैक्षवः। विषयं तमधिकृत्य रचितमिदं प्रहसनं कुहनाभैक्षवमिति।

**कुहनाभैक्षवस्य पात्रपरिचयः**

सूत्रधारः इति प्रहसनप्रावर्तकः। नटी इति सूत्रधारस्य पत्नी। दामोदरः इति गोपिकारमणस्य भिक्षोः शिष्यः। शङ्करकौशिकी इति गणिका। भिक्षुः इति गोपिकारमणाख्यो विटः। गोविन्दः इति गोपिकारमणस्य भिक्षोः शिष्यः। चन्द्ररेखा इति गणिका। कौमुदिका इति चन्द्ररेखायाः सखी। तुरुष्कः इति कश्चिद् भटः तुरुष्कसैन्यस्थः। अहमदखानः इति युवा तुरुष्कः महाराजः। किङ्करः इति अहमदखानस्य सेवकः। षण्डः इति अहमदखानस्य सभापाषण्डः। चकोरिका इति करण्डिकावाहिनी। माधविका इति स्त्रीवेषधारी दामोदरः। हम्मीरखानः इति अहमदखानस्य सैनिकश्च।

**कुहनाभैक्षवस्येतिवृत्तम्**

गोपिकारमणाख्यो विटः कश्चिद् भिक्षुश्चन्द्ररेखाख्यायामतिरक्त उन्मत्तः। चन्द्ररेखापि अहम्मदखानाख्यस्य यूनः कस्यचित्तुरुष्कस्य महाराजच्छत्रधारिणो गणिका। गोपिकारमणस्य शिष्यो दामोदरस्तत्कथामुपस्थापयति। गणिकान्तरं शङ्करकौशिकी नाम्नी दामोदरमुन्मत्तस्य भिक्षुगुरोरस्योन्मत्ततां विवृणोति। दामोदरः शङ्करकौशिक्याः सर्वं गुरोर्दुर्वृत्तं श्रृणोति। अथ भिक्षुगोपालसंवादस्तत्र गोविन्दोऽपि

1.सू.पा. ३. ३. १०७.





भिक्षोरिशिष्यः। चन्द्ररेखा अहम्मदखानस्यान्तःपुरे वर्ततइति भिक्षोः खेदः। सगोविन्दो भिक्षुर्देवोद्यानं प्रविशति कृष्णनमस्कार-पुष्पसञ्चयनादिमिषेण। तत्र स चन्द्ररेखया सह रमते। कस्यचित्तुरुष्कस्योद्यानप्रवेशाद् भिक्षो रमणं विघ्नितम्। भिक्षवे जातकोपा शङ्करकौशिकी हम्मीरखानवेषधारिणी गृहीतखड्गा भिक्षुं भाययति। अथ गोविन्ददामोदरसंवादस्तत्राहम्मदखानदस्तुरखानयोर्मिथ चन्द्ररेखा-निमित्तं वैरं प्रवृत्तमिति सूच्यते। कौमुदिकाच्छन्नवेषेण भिक्षुरहम्मदखानसभाप्रवेशो दामोदरेण निर्दिष्टः, दामोदरश्च चेटीवेषधारी। अहम्मदखानसभायां हास्यपूर्णो रङ्गः प्रचलति। पुनरपि भिक्षुचन्द्ररेखयोर्मेलनं हास्यपरम्। तत्र दामोदरगेविन्दयोरपि सरसभाषणं तदेव परिपोषयति। दामोदरो वदति भिक्षुं प्रतिभगवन्, किं ते भूयः प्रियमुपहरामि? भिक्षुराह-किमतः परं प्रियमस्ति,

**अतिसन्धाय तरसा तुरुष्कसरघव्रजम्।**
**सच्छिध्येण त्वया यस्मान्मधुधारा ममार्पिता।।**[1] इति।

अथ भरतवाक्येन प्रहसनसमाप्तिः। प्रहसनं चेदं मत्तविलासादिप्रतिस्पर्धि सहृदयमनोमुकुरान् समावर्जयति।

**कुहनाभैक्षवपात्रवैशिष्ट्यम्**

अत्र प्रहसने भिक्षुः, दामोदरः, गोविन्दः, चन्द्ररेखा च स्वस्वपात्रदृष्ट्योत्तमतां भजन्ते। भिक्षुः कामी मठपूजादिविमुखो यथाकालं चन्द्ररेखाशङ्करकौशिक्याद्यासु रक्तो विटदेश्यः प्रतिभाति। वेषैकमात्रे भिक्षुत्वे, विटैकशीलत्वात् मत्तविलासादिपात्रेष्विव सुगतानां कापालिकानां पाशुपतानां वा यथासंगतं संस्कारापचयं तथासंगतमनेनेतिवृत्तेन भैक्षवं प्रहसनमिदं प्रकाशयति। यथा[2]- "रत्या विमुक्त इव नीलवृषो वितन्तुः" इत्यादीनि शिष्यवाक्यान्यत्र निदर्शनम्। विद्धशालभञ्जिकायामपि यथा गुरुस्तथैव शाण्डिल्यः। नियमेनाचरणीये भिक्ष्वादितत्त्वे कुहनया वृत्त्या कामचारिता परिहासेन

1. कु. भै. ६१.
2. कु. भै. १०.

प्रद्योतिता। चन्द्ररेखापि भिक्षोस्तत्रानुकूलायते यथोद्यानक्रीडोन्नमनादिकेलिष्विति नात्र विस्तरः।

## प्रहसनलक्षणम्

प्रहसनं नाम भगवत्तापसविप्रैरन्यैरपि हास्यवादसंवद्धम्, कापुरुषसंप्रयुक्तम्, परिहासाभाषप्रायं रूपकमिति भरतः [1] । पाखण्डिविप्रप्रभृतिचेटचेटीविटाकुलं वेषभाषाभिश्चेश्चेष्टितं हास्यवचोन्वितं कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैर्युक्तं रूपकं तदिति धनञ्जयः [2] । भाणवत्संधिसंध्यगलास्यांगांकैर्विनिर्मितं निन्द्यानां कविकल्पितं वृत्तं प्रहसनमिति विश्वनाथः [3] । भाणवत्संध्यंगवृत्त्यंगवर्णनं पाषण्डविप्रप्रभृतिचेटचेटीविटाकुलं हास्यवचोन्वितं हास्यरसप्रधानं रूपकं प्रहसनमिति विद्यानाथः[4]।

## प्रहसनलक्षणस्य कुहनाभैक्षवे समन्वयः

निन्द्यानां कविकल्पितं वृत्तम्, हास्यवचोन्वितं हास्यरसप्रधानम्, कापुरुषसंप्रयुक्तम्, कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैर्युक्तं रूपकमित्यादिसर्वाङ्गीणप्रहसनलक्षणं समन्वितं पश्यत, यथा कुहनाभैक्षववाचिकैकदेशाः —

भिक्षुः —(सरोमाञ्चमात्मगतम्) अहो सुखस्पर्शता वेश्याकरस्य! **रण्डाभिर्बहुधा स्पृष्टे व्यासपूजासु मे पदे।**
**नैतादृशं सुखं क्वापि वञ्चितोऽस्मि चिरं वृथा।।**[5] इति। यथा वा —

भिक्षुः — अबले किं दण्डप्रयासेन?

1 .नाट्यशास्त्रम्. १८-१५५.

2. दशरूपकम्. ३.५४-५५.

3 .साहित्यदर्पणः ६.२६४ .

4. प्रतापरुद्रीयम्. ३.४१-४४.

5 .कु. भै. २३.





**त्वामेव तन्वङ्गि समुत्क्षिपामि द्वाभ्यां कराभ्यामिह पुष्पहेतोः।**
**प्रह्वे मयि न्यस्तपदाम्बुजा वा सुखेन सम्पादय पुष्पजातम्।।**[1]

(चन्द्ररेखायाः पुरतः प्रह्वस्तिष्ठति)। यथा वा —

**गाढं समाश्लिष्य नितम्बमस्याः करान्तसंस्पृष्टनितम्बमूलः।**
**हा हन्त शाखामृगरूपभाजा हतेन दैवेन निवारितोऽस्मि।।**[2] इति। यथा वा —

भिक्षुः — **जायते विघ्नमेघालिश्चन्द्ररेखावलोकने।**
**सच्छिष्येण त्वया भद्र मारुतेनापसार्यते।।**[3] इति।

यथा वा —

भिक्षुः —(सर्वतोऽवलोक्य) अहो वृक्षवाटिकायाः सौभाग्यम्!
**हसन्तीव लताः पुष्पैर्वर्धयन्ति पिकस्वरैः।**
**मानसावर्जने पुंसां वेश्याभिरिशिक्षिता इव।।**[4]

इत्थं प्रहसनलक्षणं कुहनाभैक्षवे सम्यक्समन्वितम्। विस्तरस्तु सहृदयैः स्वयमूह्यम्।

## कुहनाभैक्षवप्रहसननायकवैशिष्ट्यम्

यथाशुद्धप्रहसनलक्षणं [5] कश्चन भिक्षुर्गोपिकारमणाख्यो विटोऽत्र नायकः। तपस्वि-भगवद्विप्रप्रभृतीत्यादेः प्रभृतिग्रहणाद्

1 .कु. भै. २५.

2 .कु. भै. २६.

3 .कु. भै.४८.

4 .कु. भै.४९.

5 तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः। .
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते।। -साहित्यदर्पणः)६.२६६ ( इति।
भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्गैर्विनिर्मितम्।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्।। -साहित्यदर्पणः)६.२६४ ( इति।

भिक्षोरशुद्धप्रहसननायकत्वं युक्तम्। यथाऽत्रैव कुहना-भैक्षवे भिक्षुवर्णने दामोदरोक्तौ[1]-

**आकुञ्चिताङ्गुलिदलप्रवरप्रहारैराकर्णमस्तकपटीररसानुलेपः।**
**आयाति भिक्षुरलसं हृदये दधानः कान्तां कुचद्वयविलेपितचन्दनार्द्राम्।।**

इत्यत्र भिक्षोरलसायानम्, हृदयगतकान्तास्वरूपपरिपोषणम्, सुगन्धदायिपटीर-रसानुलेपादि च हृष्टहास्यतामुपेत्य शुद्धप्रहसनानुरूपं भजते। अपि च भिक्षोः सुखातिशयाभिनयः[2]-

**सद्यः प्रभवति शमयितुमहमदखानस्य शतभवं शोकम्।**
**अस्या वामकराग्रप्रहार एकोऽपि मस्तकन्यस्तः।।** इति।

अस्मिन् पद्ये शतभवमपि शोकं शमयितुमिति यतिशोकस्य विरोधाभासत्वेन प्रहसनानुगुणो भिक्षोर्नायकत्वं स्पष्टमेव। मद्यमांसगणिकादिसक्तस्य मत्तविलासप्रहसनभिक्षोः छायामयं भिक्षुरनुस्मारयति। यथा वा भिक्षूक्तौ भिक्षुदामोदरसंवादः[3]-

**वेश्याजनोचितविनोदविधौ.विदग्धा प्रत्यग्रकेलिपुरुषायितमावहन्ती।**
**ताटङ्कयुग्मपतनेन विलोलकर्णा वैतन्तवीं सुखकलामपि च व्यतानीत्।।**
इति।

अत्र वैतन्तवी सुखकलेत्यादि चित्ररेखावर्णनमपि च भिक्षोर्वेश्याजनवैदग्ध्य-परिचयश्च विटजातिसामान्यं किञ्चिदनुस्मारयति। तेन हि भिक्षोर्विटत्वं शुद्धप्रहसनानुकूलं विलसति। यथा वा भिक्षुणः परमप्रियकल्पनम्[4]-

**अतिसन्धाय तरसा तुरुष्कसरघव्रजम्।**

---

1 .कु. भै. ५७.

2 .कु. भै. ५९.

3 .कु. भै. ६०.

4 .कु. भै. ६१.





**सच्छिष्येण त्वया यस्मान्मधुधारा ममार्पिता।।** इति।

अत्र त्वया मधुधारा मम अर्पितेति भिक्षुव्यवहारे भिक्षोर्लोकसङ्गित्वस्य परिहास्यत्वात् प्रहसनस्य शुद्धत्वं भिक्षोर्नायकत्वं च युक्तं प्रतिभाति। अपि च भरतवाक्ये[1]-

**काले सन्तु समन्ततोऽपि जलदा धारालधारमुचो**
**धात्रीयं चतुरर्णवीवलयिनीसस्यातिशस्या भवेत्।**
**कुर्वन्तु द्विजसत्तमा दिविषदामिष्टैरभीष्टैः प्रियं**
**कान्तासम्मितया गिरा कृतविदो दीव्यन्तु भव्या बुधाः।।** इति।

अस्मिन् वाक्ये अभीष्टैरिति, प्रियमिति, दीव्यन्त्विति, कान्तासम्मितया गिरा कृतविद इति च भिक्षुप्रयोगेण तल्लौकिकोपरमत्वस्यायुक्तत्वेऽपि भिक्षोः प्रहसन-प्रसङ्गत्वात् तत्परिहास्यत्वेन तन्नायकत्वं नितरां शोभते। विस्तरस्तु भिक्षोर्व्यव-हारान्तरेऽपि सहृदयैरूह्यश्च।

**कुहनाभैक्षवप्रहसननायिकावैशिष्ट्यम्**

यथाशुद्धप्रहसनलक्षणं हि चन्द्ररेखा नाम गणिका नायिका। तस्याश्च स्वरूपं यथा कुहनाभैक्षवे[2]-

**कुसुमस्मितानुरञ्जितपल्लवनिवहा सकोकिलालापा।**
**आभाति भृङ्गकेशा सहकारलताऽत्र चन्द्ररेखेव।।** इति।

अस्मिन्नुदाहरणे भृङ्गकेशत्वं सहकारलतायाश्चन्द्ररेखायाश्च समानतया सहकार-शब्देन विटार्थबोधकेन च गणिकायाः स्मयानुरञ्जनमधुरालाप-विटाकर्षणादि तस्याः प्रहसन-नायिकात्वं स्पष्टयति। यथा वा[3]-

**किं प्राप्ता सतमालमम्बुदधिया विद्युल्लतेदं वनं**
**देवस्योत्सवदर्शनाय ससखी स्वर्गाद् गता मेनका।**

---

1 . कु. भै.६२.

2. कु. भै. १९.

3 .कु. भै. २०.

**देवोद्यानमिहास्थितेव निलयात् किं वा मधुश्रीः स्वयं**
**मूर्ता मोहयितुं जगन्ति वलते मायाऽथवा मान्मथी।।** इति।

अत्र यथा मोहिनी दैत्यानमोहयत्, अथवा मान्मथी माया जगन्ति वलते इति गणिकागतं वैदग्ध्यं चित्ररेखायाः स्पष्टमिति शुद्धप्रहसनानुगुणं तन्नायिकागुणं प्रकटमेव। यथा वा गोविन्दोक्तचन्द्ररेखावर्णनम्[1]-

**अंसाग्रलम्बिकचभारमुदस्तकण्ठा भ्रूभङ्गभिन्नतिलकं प्रविलोकयन्ती।**
**गृह्णाति कङ्कणवता करपल्लवेन पुष्पाणि निर्भरमरन्दमनोहराणि।।** इति।

अत्रापि साग्रलम्बिकचभारमुदस्तकण्ठा भ्रूभङ्गभिन्नतिलकं प्रविलोकयन्ती गणिकागतं वैदग्ध्यं चित्ररेखायाः स्पष्टमिति शुद्धप्रहसनानुगुणं तन्नायिकागुणं प्रकटमेव। यथा वा [2]-

**तिष्ठन्ती प्रपदद्वयेन कुचयोर्भारेण नम्रा मुहु-**
**र्लक्ष्यालक्ष्यवलित्रया दरगलन्नीवी गलन्मेखला।**
**धृत्वैकेन करेण केसरलतामन्येन पुष्पावलिं**
**चिन्वानास्फुटबाहुमूलमबला पारं गिरां गाहते।।** इति।

अस्मिन् पद्ये कुचयोर्भारेण नम्रा मुहुर्लक्ष्यालक्ष्यवलित्रये-त्याद्याकारवर्णनम्, दरगलन्नीवीत्वम्, गलन्मेखलात्वम्, पुष्पावलिचयनादिकं च गणिकागतं वैदग्ध्यम्, तन्नायिकागुणत्वं च स्पष्टयति। यथा वा दामोदरभिक्षुसंवादः[3]-

**अङ्गकान्तिविमलोर्जिता ज्वलितकामचापचपलश्रिया**
**साऽङ्गनाजनविभूषणा यदि च सङ्गतैव हि मया पुनः।**
**तुङ्गपीवरपयोधरा लसति मङ्गलाननसुपङ्कजा**
**भृङ्गकोमलमनोहरा मनसि लास्यभाववहुलाङ्गना।।** इति।

1 .कु. भै. २१.
2 .कु. भै. २२.
3 .कु. भै. ४२ .





पद्येऽस्मिन् ज्वलितकामचापचपलश्रियाऽङ्गकान्तिविमलोर्जितत्वम्, अङ्गना-जनविभूषणत्वम्, तुङ्गपीवरपयोधरत्वमित्यादि विटमनोमथनयुक्तमिति च गणिकागतं वैदग्ध्यम्, तन्नायिकागुणत्वं च स्पष्टयति। यथा वाऽपरो दामोदरस्य चित्ररेखापरामर्शः[1]-

**धम्मिल्लश्लथराजिरभितः प्रस्विन्नगण्डस्थला**
**श्वासाकम्पितपीवरस्तनतटव्याकीर्णहारावलिः।**
**बन्धक्रीडनवेल्लदूरुसुरतश्रान्त्या नितान्तालसा**
**मन्दं मन्दमिहोपयाति मदनव्यापारपारङ्गता।।** इति।

पद्येऽस्मिन् चित्ररेखायाः प्रस्विन्नगण्डस्थलत्वम्, नितान्तालसत्वम्, मदनव्यापार-पारङ्गतत्वं च गणिकागतं वैदग्ध्यम्, तन्नायिकागुणत्वं च विशदयति। एवं शुद्धप्रहसनो-चितनायिकात्वमपि सोदाहरणं स्पष्टीकृतम्।

**रूपकान्तरसंवादः**

**संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत्।**
**आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्॥**[2] इति,
**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।**
**तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत्कविः॥** [3] इति चानन्दवर्धनोक्तिस्वारस्येन संवादतत्त्वमनुस्मारयतेवात्र कुहनाभैक्षवस्यापि शरीरिणां तुल्यदेहिवदिवान्यसाम्यरूपः संवादो "मत्तविलासेन" वा "विद्धशालभञ्जिकया" वा "धूर्तसमागमेन" वा "लटकमेलनेन" वा प्रहसनान्तरेण वा सह स्पष्टः। विस्तरभयाच्च सर्वोऽपीह न प्रतन्यते।।

**सन्दर्भग्रन्थसूची**

1. कु. भै. ५८.
2. ध्वन्यालोकः-४.१२.
3 .ध्वन्यालोकः-४.१३.

1. नाट्यशास्त्रम्–आचार्यभरतमुनिविरचितः, परिमलपब्लिकेशनस्, दिल्ली, प्रथमसंस्करणम् – १९९८.

2. मलयमारुतः, चतुर्थः स्पन्दः–वि. राघवन, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, १९७८.

3. श्रीजगन्नाथवल्लभनाटकम्, विष्णुप्रिया ओझा, फ्रेण्डस् पब्लिशर्स १९८२.

4. साहित्यदर्पणः–विश्वनाथविरचितम्, काशीसंस्कृतग्रन्थमाला १४५, चौखम्बासंस्कृतसंस्थान, वाराणसी, पुनर्मुद्रणम् – २०११.

5. संस्कृत नाटिकाअओं का नाट्यशास्त्रीय अध्ययन, डॉ. प्रमिला संजय, रोशन
ऑफसेट प्रेस, दिल्ली-११०००२, २००६.

6. दशरूपकम् – धनञ्जयः, धनिकाकृतावलोकसहितम्, चौखम्वा विद्याभवन,
वाराणसी, प्रथमसंस्करणम् – १९६७.

7. अलङ्कारशास्त्रस्येतिहासः – डा. जगदीशचन्द्र मिश्रः चौखम्वा प्रकाशनम्,
वाराणसी, प्रथमसंस्करणम् -२००१.

8. शृङ्गारप्रकाशः भोजराजकृतः, द्वितीयो भागः, महामहोपाध्यायो रेवाप्रसादो
द्विवेदी, सदाशिवकुमारो द्विवेदी, इन्दिरागाँधीराष्ट्रियकलाकेन्द्रम्, नईदिल्लीकालिदास-संस्थानम्, वाराणसी-२२१००१, २००७.

9. सौन्दर्यशास्त्रम्, ममताचतुर्वेदी, राजस्थानहिन्दीग्रन्थअकादमी, जयपुरम्, २००२.

10. संस्कृत नाटिकाओं का नाट्यशास्त्रीय अध्ययन, डॉ.प्रमिला संजय, रोशन ऑफसेट प्रेस, दिल्ली-११०००२, २००६.

11. श्रीजगन्नाथवल्लभनाटकम्, विष्णुप्रिया ओझा, फ्रेण्डस् पब्लिशर्स, १९८२.





12. विदग्धमाधवम्, श्रीरूपगोस्वामिविरचितम्, चौखम्वासंस्कृतप्रतिष्ठानम्, दिल्ली-७, १९७०.

13. नाट्यदर्पणम्, पं.थानेश्चन्द्र उप्रैती, परिमलपब्लिकेशन्स, दिल्ली-७, १९९४.

14. नाटकचन्द्रिका, पं. वावुलालशुक्लेन सम्पादिता, चौखम्वासंस्कृतप्रतिष्ठानम्,
दिल्ली-७, १९६४.

15. The Latakamelana, (Dramatic Prakrit Satirising the Digambara Jains) composed by Shankhadhara, Bühler & Petersen, Cat. Guj. II. 122, 1883-4.; A Journey of Literary and Archaeological Research in Nepal and Northern India During the Winter of 1884-85, by Cecil Bendall, 1886. Reprint: Publ. Asian Educational Services, New Delhi-2, 1991, ISBN: 8120606159, 9788120606159.

16. The Dhūrtasamāgama : Jyotirīśvara, Jagadīśvara Bhaṭṭacārya.; Carl Cappeller,
1883.; Dhūrtasamāgama & Hāsyārṇava, Ed. Cappeller, Volume 1571 of Harvard College Library Preservation Microfilm Programme, 44 pages.

17. विद्धशालभञ्जिका, राजशेखरकृता, भास्कर-रामचन्द्र आप्टे द्वारा सम्पादिता-पूना-1886.

18. मत्तविलासप्रहसनम्, महेन्द्रविक्रमवर्मदेवकृतम्, चौखम्भाविद्याभवनग्रन्थ-माला, वाराणसी-1966.; त्रिवेन्द्रं संस्कृत सीरीस-4, 1917.

**************

# प्रतिमानाटके नायको नायिका च

-डॉ. मनमोहन तिवारी
सहायकाचार्यः,
मुम्बादेवी आदर्शसंस्कृत-
महाविद्यालय; मुम्बई।

**यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद्रामायणकथा लोकेषु प्रचरिष्यति।।** (वा.रा.-1)

भारतीयनाट्यकृतां रचनासु सर्वप्राचीनानि रूपकाणि महाकवेर्भासस्य प्राप्यन्ते। असौ महाकविः ई. पू. चतुर्थशताब्यामस्मिन् धराधाम्नि जनिं लेभे इति विपश्चितः मन्यन्ते। महाकविना भासेन त्रयोदशनाटकानि विरचितानि सन्ति। तेषु प्रतिमानाटकं सर्वोत्तममस्ति तथा रामायणकथामनुसरति।

महर्षिः वाल्मीकिः रामायणं प्रणिनायि, एतावता रामायणम् आदिकाव्यमुच्यते। सिद्धरसप्रबन्धोऽपि रामायणं कथ्यते। रामायणं हि न केवलं भारतस्य अपितु अशेषजगतः सांस्कृतिकः अभिलेखोऽस्ति, विश्वस्य प्रत्येकं भाषायामनुवादमाध्यमेन रामायणं पठ्यते। रूसदेशे इण्डोनेशियादेशे च अभिनयमाध्यमेन रामकथायाः श्रवणं क्रियते। थाईलैण्ड-श्याम-वर्मा-कम्बोडिया-मलेशिया-प्रभृतिषु देशेषु रामकथायाः प्रचलनं तत्रत्ये रामायणरूपे अभवत्। भारतेऽपि यदा संस्कृतं सम्भाषणस्य भाषा अथवा व्यवहारस्य भाषा नाभूत् तदा निजभाषासु महापुरुषाः रामायणकथायाः गुणगानं चक्रुः दक्षिणभूभागे तेलगूभाषायां रङ्गनाथरामायणं तमिलभाषायां कम्बुरामायणञ्च प्रण्यनीयत्। कृत्तिवासः वंग्लाभाषायां तथा महाराष्ट्रे महामुनिरेकनाथः भावार्थशैल्यां रामकथामगायत्। उत्तरभारते महात्मा तुलसीदासः अवधीभाषायां रामचरितमानसं प्रणिनाय। यत्र मानवजीवनस्य समस्ताः अनुभूतयः दृश्यन्ते। साहित्यं समाजस्य दर्पणः भवति एतावता तत् सर्वदा मानवतां रक्षति नरान् श्रेयसे प्रवर्तयति च। अतः साहित्यं कियदपि प्राचीनं





कथन्न स्यात् तस्य जीवन्तता सदा तिष्ठत्येव, तथा रामस्तु जगतः नयनाभिरामो वर्तते सीता च करुणायाः साक्षात् मूर्तिमती प्रतिभाति।

**हा वत्स ! राम ! जगतां नयनाभिराम !**
**हा वत्स! लक्ष्मण! सलक्षणसर्वगात्र !**
**हा साध्वि! मैथिलि! पतिस्थितचित्तवृत्ते।**
**हा हा गताः किल वनं बत मे तनूजाः।।** (प्रतिमानाटकम् 2.4)

श्रीमद्वाल्मीकिरामायणस्य वृत्तमेव वस्तुतः प्रतिमानाटकस्य आधारवृत्तमस्ति इदमेव हि अस्य नाटकस्य स्रोतः उपजीव्यञ्च भवति। प्रतिमानाटकं सप्तस्वङ्केषु विभाजितं रामकथाधारितं सर्वोत्तमं नाटकमस्ति, यत्र नाना घटनाः महाकविना भासेन निबद्धाः सन्ति। यथा-रामस्य वनगमनं, सीतायाः हरणं महात्मनः भरतस्य भ्रातृप्रेम, रावणं निहत्य रामस्य सपरिवारस्य सीतया सह तपोवनं प्रति गमनं तत्रैव सपरिवारस्य महात्मनः भरतस्यापि समागमः, रामस्याभिषेकः सर्वैः सह रामस्य अयोध्यां प्रति प्रस्थानं चेह निबद्धमस्ति।

प्रतिमानाटकस्य तृतीयाङ्के प्रतिमावर्णनं निरूपितमस्ति। अनेन प्रतिमावर्णनेन प्राचीनभारतस्य कलाविषयकं नवीनवृत्तान्तं दृष्टिपथि आगच्छति। प्राचीनसमये राज्ञां देवकुलानि भवन्तिस्म यत्र शरीरत्यागानन्तरमतीतानां राज्ञां पाषणखण्डस्य प्रतिमाः स्थाप्यन्तेस्म इक्ष्वाकुवंशस्यापि एवमेव देवकुलमासीत् यत्र सूर्यवंशस्यापि अतीतानां राज्ञां प्रतिमाः स्थापिताः आसन्, ताः भरतः ऐद्प्राथम्येन पश्यति। तत्र दिलीपः, अजः, रघुः, तदनन्तरं दशरथः एवं क्रमेण प्रतिमाः विन्यस्ताः आसन्। अत्रातीतानामेव प्रतिमाः स्थापिता इति देवकुलिकात् ज्ञात्वा भरतः मूर्छाक्रान्तः भवति। एवं भरतस्य मनसि पितुर्मरणं प्रतिमितं भवति प्रतिमादर्शनेन। अतः निश्चीयते यत् प्रतिमानाटकस्य इतिवृत्तं रामायणस्य मूलवृत्तस्य कविकल्पनाप्रसूतं रूपान्तरमेवास्ति।

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।।**
(ध्वन्यालोकः चतुर्थः उद्योतः)

उपजीव्यसाहित्यानि प्राधान्येन त्रीणि सन्ति रामायणं महाभारतं पुराणानि च महाकविः भासः इमानि आधारीकृत्य त्रयोदश-नाटकानि विरचयामास। रामायणन्नाम महाकाव्यं महाभारतञ्चेतिहासः। कर्मप्रधानं रामायणम् एवं ज्ञानप्रधानं श्रीमद्भागवतं महाभारतञ्च व्यवहारप्रधानं विद्यते। सिद्धरसप्रबन्धाख्यं रामायणमुच्यते। विदुषां मतं विद्यते यन्महाभारतस्य रचनां विधाय महामुनिः व्यासः यदा शान्तिं न लेभे तर्हि स्वान्तः सुखाय भक्तिप्रधानं श्रीमद्भागवतं विरचयामास। यद् पुराणानां मुकुटमणिः विद्यते।

**" विद्यावतां भागवते परीक्षा "**

भगवान् रामभद्रः अस्य नाटकस्य धीरोदात्तः नायकोऽस्ति देवी सीता च स्वकीया नायिका नायकस्य सामान्यगुणैर्युक्ता विद्यते। आचार्यभरतमुनिना प्रणीते नाट्यशास्त्रे नायिकानां सखीनाञ्च संवादभाषा शौरसेनी प्रथितास्ति।

**' नायिकानाञ्च सखीनाञ्च शौरसेनी प्रकीर्तिता '**

तत्रैव संस्कृतनाटकेषु नायकाः उच्चवर्गीय नेतारश्च सर्वथा संस्कृते व्यवहरन्ति नाटकस्य विभागः अङ्केषु वर्तते। संस्कृतरूपकाणि दश सन्ति तथा संस्कृतनाटकं सर्वथा सुखान्तकं भवति तत्र ग्रीकनाटकन्तु द्विविधं सुखान्तदुःखान्तभेदात् भवति।

**नाटकमथ प्रकरणं भाण-व्यायोगसमवकारडिमाः।**
**इहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश।।** (सा.द. 6.3)

नायिकानायकयोः निरूपणप्रसङ्गे कविराजः विश्वनाथः साहित्यदर्पणे आह—

**त्यागी कृतीकुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तः लोकस्तेजो वैदग्ध्यशीलवान्नेता।।** (सा.द. 3.30)

तात्पर्यं नायकानां चत्वारो भेदाः तत्र धीरोदात्त-धीरोधत्त धीरललित-धीरप्रशान्त भेदात्।

**नायिका**

**अथ नायिका त्रिभेदा स्वान्या साधारणी स्त्रीति।**
**नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता।।** (सा.द. 3.56)





महाकविः रामस्य व्यक्तित्वं मञ्जुलतया निरूपयामास रामस्य न कस्मिंश्चित् आसक्तिः स निष्कामभावेन कठोरजीवनं निर्वहति। त्यागभावः उत्कृष्टः यत् पराक्रमेण प्राप्तां लङ्कां महाराजाय विभीषणाय प्रयच्छति।

रामस्य चरित्रे प्रारम्भत एव वैराग्यपूर्णभावनायाः दर्शनं भवति मात्रा कैकेय्या सः वनवासं प्राप्नोत् किन्तु न चावेशः तस्य मुखपद्मे अस्ति। राज्यं विहाय वनवासं स्वीकृत्य तस्य नोद्वेगः लक्ष्यते जनाः भगवतः रामस्य धीरतां विलोक्य आश्चर्यं प्रकटयन्ति।

**वनगमननिवृत्तिः पार्थिवस्यैव तावद्**
**मम पितृपरवत्ता बालभावः स एव।**
**नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-**
**मथ च न परिभोगैर्वञ्चिता भ्रातरो मे।।** (प्र.ना.1. 4)

प्रतिमानाटकस्य रामः महान् त्यागी प्रचण्डपितृभक्तोऽस्ति। आदर्शवादस्यायं स्वरूपं भवति, सांसारिकता तं उद्वेलयति। एकतस्तु वैराग्यभावना तत्रैव कर्तव्यबुद्धिश्चः उभयोः संघर्षः अस्य व्यक्तित्वं दर्शयति। सति वैभवेऽपि निस्पृहता विपत्तीनां सङ्क्रमणेऽपि कर्तव्यनिष्ठा अस्य विशालतां द्योतयति।

**सीता**

प्रतिमानाटकस्य सीता गौरवशालिनी प्रकृतिगभीरा चास्ति न च तस्याः हर्षः राज्याभिषेकात् न वा ग्लानिः वनगमनश्रवणाच्च जायते। सा रामं जगाद- प्रियं मे, महाराज एव महाराजः, आर्य पुत्र एव आर्य पुत्रः।

**" ननु सहधर्मचारिणी खल्वहम् "** (प्रतिमानाटकम्-प्रथमोऽङ्कः)

भगवतो रामभद्रस्य राक्षसगृहप्रवासजनितामाशङ्कामाकर्ण्य सा तडिदिव आक्रोशं व्यनक्ति यथा--

**किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम्।**
**रुक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव।।**

**न तथास्मि महाबाहो यथा मामवगच्छसि।**
**प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शप।।**

(वाल्मीकिरामायणम्)

प्रतिमानाटके महाकविना भासेन निरुपिता सीता नायिका अस्ति। सा रागद्वेषादिना रहिता आर्यरमणी विद्यते। यदि रामः मर्यादा-पुरुषोत्तमः सन् पौरुषप्रतीक इव लक्ष्यते, तर्हि सीता रामस्य सत्प्रेरणारूपे प्रतिष्ठिता भवति। भगवान् रामः सूर्यः तर्हि देवी सीता तस्य छाया तिष्ठति।

**कृतान्तशल्याभिहिते शरीरे तथैव तावद्धृद्व्रणो मे।**
**नानाफलाः शोकशराभिघातास्तथैव तत्रैव पुनः पतन्ति।।**

(प्रतिमानाटकम् 5.4)

इति सीता भगवतः सन्तापं यदा पृच्छति तदा भगवान् उत्तरयति—

**गच्छन्ति तुष्टिं खलु येन केन त एव जानन्ति हितां दशां मे**
**इच्छामि पूजां च तथापि कर्तुं तातस्य रामस्य च सानुरूपाम्।।**

इत्थं येन केनापि विधिना भगवान् रामः श्राद्धं कर्म तस्मिन् वने सम्पादयति इति। यद्यपि जगतः वन्द्यौ सीतारामौ नः श्रेयो विधत्ताम्, तयोः चरणधूलयः पुनन्तु अस्मानिति।

## सन्दर्भितपुस्तकानां सूची


1. संस्कृति के चार अध्याय — डॉ. रामधारी सिंह दिनकर
2. ध्वन्यालोकः — आचार्यः आनन्दवर्धनः
3. साहित्यदर्पणः — कविराजः विश्वनाथः
4. प्रतिमानाटकम् — भासः
5. संस्कृतसाहित्येतिहासः — बलदेव उपाध्यायः
6. रामायणभूमिका — रामानन्दसागरः


**************





# मालतीमाधवे नायको नायिका च


डा. बि. कामाक्षम्मा
सहायकाचार्या,
साहित्यविभागः,
श्रीलालबहादुरशास्त्रीराष्ट्रिय-
संस्कृतविद्यापीठम्, नवदेहली-16


संस्कृतसाहित्ये सर्वोत्कृष्टस्य कालिदासस्य समस्थानं प्राप्नोत् भवभूतिः। प्राचीनाः केचन सर्वोत्कृष्टत्वं भवभूतेरिति वदन्ति। "उत्तरे रामचरिते भवभूतिर्विशिष्यते" इति वचनं तत्समर्थकं भवति। भवभूतिः त्रीणि नाटकानि अरचयत्। तानि यथा- 'महावीरचरितम्' 'मालतीमाधवम्' 'उत्तररामचरितम्' च। तेषु मालतीमाधवम् प्रवरणं भवति। साहित्यदर्पणानुसारेण प्रकरणलक्षणानि

यथा- "भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
सापाय धर्मकामार्थपरो धीरप्रशान्तकः 3।।224।।
नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।।
कितवद्यूतकारादिविटचेटकसंकुलः।।सा.द.P.509'

प्रकरणनामकरूपके लौकिकं, कविकल्पित इतिवृत्तं भवेत्। अङ्गिरसो शृङ्गारः, नायकः विप्रो, अमात्यो, अथवा वणिक् स्यात्। नायकः धीरप्रशान्तः भवेत्। विपत्करसमयेष्वपि नायकः धर्मकामार्थपरो भवेत्। नायिका कुलजा अथवा वेश्या अथवा क्वचित् कुलजा, वेश्या द्वेऽपि भवितुमर्हतः।

**नामसार्थक्यम् :-**

भवभूतेः द्वितीया नाट्यकृतिः मालतीमाधवम्।। मालतीं माधवं च अधिकृत्य कृतं प्रकरणं मालतीमाधवम्। प्रकरणेऽस्मिन् मालतीमाधवौ नायिका नायकौ इति पृथक् कथनस्यापेक्षा नास्ति। नामकरणे नायिका नायकयोः

प्राधान्यात् अत्र शृङ्गारः प्रधानरसः इति प्रातीयते एव, बीभत्स-रौद्रादयो अङ्गरसाः भवन्ति।

**सङ्क्षिप्तकथावस्तुः-**

पुरा भूरिवसुः देवरातः इति द्वौ ब्राह्मणौ अस्ताम्। द्वावपि निश्चयं कुरुतः यदि एकस्य पुत्रो, एकस्य पुत्री स्यान्तर्हि तयोः विवाहं करिष्यावहेति। निश्चयममुं बौद्धसन्न्यासिनी कामान्दकी, तस्याः शिष्या योगिनी सौदामिनी च जनीतः। कालान्तरे भूरिवसु-देवरातौ मन्त्रिपदवीं अलश्चक्रतुः। भूरिवसुः, पद्मावतीनरेशस्य मन्त्री, देवरातः विदर्भनरेशस्य मन्त्री आसीत्। गच्छति काले भूरिवसोः एका पुत्री सञ्जाता सैव प्रकरणस्यास्य नायिका मालती, देवरातस्यापि एकः पुत्रः सञ्जातः स एव प्रकरणस्यास्य नायकः माधवः।।

माधवस्य सखा मकरन्दः, मालत्याः सखी मदयान्तिका। मकरन्द-मदयन्तिकयोर्मध्ये प्रेमानुरागः उत्पद्यते। कापालिकस्य अघोरघण्टस्य शिष्या कापालिका कपालकुण्डला। मदनोत्सवे मालती-माधवौ परस्परं विलोक्य प्रीतिमुपागतौ। रहस्यस्थाने तौ मेलितुमिच्छतः। कामन्दकी नामकबौद्धसन्न्यासिनी मालती-माधवयोः विवाहप्रयत्नरता भवति। नन्दनः पद्मावतीनरेशस्य नर्मसचिवः भवति । मालत्याः पिता भूरिवसुः मालती नन्दनायोः विवाहं कर्तुकामो भवति। एकदा शिवमन्दिरं निकषा अशोकवने मालती - माधवयोर्मेलनाय सज्जतां करोति कामन्दकी। प्रथमं माधवः तत्र गच्छति। तदनु मालती सख्या मदयन्तिकया सह तत्र गच्छति, तदभ्यन्तरे सिंहः प्रविशति। माधवस्य सखा मकरन्दः सिंहमवाधीत्। मालत्याः सख्यां मदयन्तिकायामनुरक्तः अभूत्। तावदभ्यन्तरे अघोरघण्टनामक कापालिकः मालतीं बालात् नयति करालदेव्यै बलिदानाय। ततः माधवः अघोरघण्टं हत्वा मालतीं रक्षति। तज्ज्ञात्वा अघोरघण्टशिष्या कपालकुण्डला गुरुवधमकार्षीदिति माधवाय क्रुध्यति। मकरन्दः मालतीवेषं धृत्वा भूरिवसोः गृहं गच्छति। मालतीवेषधारिमकरन्दनन्दयोः विवाहो भवति। अत्र शिवमन्दिरे मालती-माधवयोः विवाहो भवति। मालतीवेषधारिणा मकरन्देन नन्दनः सम्यक् प्रताडनं प्राप्य उक्रोषेण ततः निर्गच्छति। तदनु मदयन्तिकापहरणकारणतः मकरन्दं



बध्नन्ति राजभटाः। तज्ज्ञात्वा उद्याने मालतीमेकाकिनीं कृत्वा माधवः मकरन्दरक्षणाय गच्छति। कपालकुण्डला मालतीं श्रीपर्वतं प्रति नयति। माधव - मकरन्दयोः पराक्रमं प्रत्यक्षीकृत्य राजा तौ विमोचयति। ततः कामन्दकी स्वकीय बुद्धिनैपुण्येन मालतीं रक्षति। तदनु मालती-माधवयोः, मदयन्तिका-मकरन्दयोः विवाहेन नाटकं सुखान्ततामेति।

**पात्रपोषणम्**

काव्यप्रयोजनम् आनन्दः। आनन्दहेतुः रसः। रसाश्रयं पात्रम्। एतान्येव दृश्यकाव्येषु अनुकार्यनाम्ना व्यवह्रियन्ते। पात्राणां कथा प्राणो भवति। कथा-वर्णना-चित्रणानुसारेण पात्राणां जीवितमधिकारो वा निर्णीयते। एतत्त्रयमनुसृत्यैव नायक-नायकेतरपात्राणि भवन्ति। पात्राणां वर्णनाचित्रणाभ्यामेव रसे विशेषः सम्पद्यते। वर्णनाः, चित्रणाः एव पात्रपोषणमित्युच्यन्ते। वर्णनम् नाम कवेर्वा कविनिबद्धवर्तुर्वा स्वयं पात्रगुणशीलकथनं भवति। समाजे प्रायः युवकाः, युवत्यः नायकनायिकयौ अनुसरन्ति। अतः काव्येषु नायकनायिकापात्राणि मार्गदर्शकानि भवन्ति। अतः इदानीं मालतीमाधप्रकरणे नायक-नायिकयाः पात्रचित्रणं क्रियते।

**नायकः माधवः**

गुणनिधिः प्रथमाङ्के माधवमुद्दिश्येवं ब्रवीति यत्-

"अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च।।"इति। पुनः "माधवो अम्रियत" इति निश्चत्य मकरन्दः दुःखितो भूत्वा माधवस्य गुणनिधित्वमेवं प्रतिपादयति- षोडशकलाभिः आपूर्णः निर्मलः चन्द्रः राहोः मुखं यातः। वर्षुकः मेघः वायोः वेगात् विलीनो जातः। फलैः परिपूर्णः श्रेष्ठवृक्षः निष्पन्नमात्रः दावाग्निना दग्धः। एवमेव हे माधव! त्वमपि अस्य जगतः शिरोरत्नतां प्राप्तः मृत्योः वशं गतः।। तद्यथा -

**"अपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं**
**सञ्जातस्य घनाघनो जलधरः शीर्णश्च वायोर्जवात्।**
**निर्वृत्तश्च फलेर्ग्रहिद्रुमवरो दग्धश्च दावाग्निना**
**त्वं चूडामाणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम्।।** ( मा. मा.9/39 )

अनेन तस्य गुणनिधित्वं व्यज्यते।

**मित्राणामानन्दजनकः, स्नेहशीलश्च :-**

नवमेऽङ्के माधवः मकरन्दमुद्दिश्य कथयति - हे मकरन्द ! त्वया, मालत्या च सह विना यः दिवसः मया यापितः सः विनश्यतु। युवाभ्यां (मालतीमकरन्दाभ्यां) अन्यत्र यः मम हर्षः स न वास्तविको हर्षः प्रत्युत हर्षाभास एव इति।। तद्यथा-

**त्वया सह न यस्तया च दिवसः स विध्वंसतां**

**प्रमोदमृगतृष्णिकां धिगपरत्र कामानुषे।।** (मा. मा. 9/35)

अनेन मकरन्दे माधवस्य स्नेहातिशयः प्रकटितो भवति। नवमेऽङ्के माधवः मालत्याः विरहवेदनातिशयेन मूर्च्छितो भूत्वा पुनः प्रत्यापन्नचेतनः भूत्वा समीपस्थमपि मकरन्दं दूरस्थं मत्वा आगच्छ त्वं मत्समीपमिति प्रलपति। तच्छ्रुत्वा मकरन्दः-

"अये! उन्मादमोहान्तरितोऽपि मां प्रति कुतश्चित् व्यञ्जकात्प्रबुद्ध एवास्य सहजस्नेहसंस्कारः। तत्संहितमेव मां मन्यते।।?" इति विचिन्त्य पुनः वदति- "एष पार्श्वचर एव ते स मकरन्दो मन्दभाग्यः।इति "

पुनः माधवः- "हा प्रियवयस्य! सम्भावय! परिष्वजस्व माम्। प्रियां मालतीं प्रति तु निराश एव संवृत्तोऽस्मि।।( मा. मा. 9/p.no.361)

अनेन माधव-मकरन्दयोः स्नेहातिशयः व्यज्यते।

पुनः तस्मिन्नेव सन्दर्भे मूर्च्छितं माधवं दृष्ट्वा "मृत इति विचिन्त्य मकरन्दो ब्रवीति- तव मरणात्परं मम शरीरं भारभूतम्। जीवितं दुःसहदुःखजनकं भवति, दिशः शून्याः, ममेन्द्रियाणि निष्फलानि, कालः दुःखदः भवति, संसारोऽयं प्रकाशरहितः।। इति। तद्यथा -

**"भारः कायो जीवितं वज्रकीलं काष्ठाः शून्याः निष्फलानीन्द्रियाणि।**

**कष्टः कालो मां प्रति त्वत्प्रयाणो शान्तालोकः सर्वतो जीवलोकः।।** ( मा. मा. 9.37 )

पुनरेवं चिन्तयति-

'माधवस्य मरणानन्तरं मया किमर्थम् जीवितव्यम्' इति आत्मानं प्रश्नं पृच्छति। माधवमरणवेदित्वमेव मम जीवनफलं किम्? यद्येवं तर्हि अहं प्राणान्





त्यजामीति, पुनः ब्रवीति- हे पुण्डरीकमुख ! माधव! जन्मत आरभ्य मया सहैव मातुः पयोधरपयः पीत्वा अधुना बन्धुजनैः प्रदत्तं तर्पणजलं त्वमेकाकी कथं पास्यसि। इति विलपति।

माधवस्य यत्र जन्म ममापि तत्रैव जन्म भवतु। परलोकेऽपि तस्यानुचरो भवामि इत्युक्त्वा प्राणत्यागाय उद्युक्तो भवति।। अनेन मकरन्दस्य माधववियोग-असहिष्णुता व्यज्यते।। तादृशं मित्रं प्राप्तवान् नाम माधवस्य स्नेहशीलता स्पष्टा।।

तस्मिन्नेव सन्दर्भे

"हा कामन्दकीमकरन्दानन्दजनक माधवेति" सम्बोधयति अर्थात् माधवः कामन्दक्याः, मकरन्दस्य च आनन्दजनक इति स्पष्टमेव।।

माधव-प्रेमिकः-

तृतीयेऽङ्के कामन्दकी कथयति यत्-

सः माधवः मदनोद्यानयात्रादिवसात्प्रभृति दुःखितमना इव समाचरन् कामवशात् शरीरोपतापेन परतन्त्र इव आचरति।

चन्द्रे एवं प्रणयिजने च यः आनन्दं न प्राप्नोति, सः धीरोपि स्वकीय दुःसहनतां मनोवेदनां प्रकटयति, अपि च सः प्रियङ्गुलतासदृशदेहकान्तोऽपि अपाण्डुमधुरमत्यन्तं कृशीभूतमपि रमणीयं शरीरं धारयति।।

कामन्दकीः-स खलु मदनोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव शरीरोपपातेन। तथाहि

**" यदिन्दावानन्दं प्रणयिनि जने वा न भजते**

**व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।**

**प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डु मधुरं**

**वपुः क्षामं क्षामं वहति रमणीयश्च भवति।। मा. मा. 3/9**

अनेन माधवस्य सौन्दर्यं प्रकटितं भवति। अपि च प्रेम्णि पतितानां मानसिकस्थितिः च प्रकटिता भवति।।

चन्द्रोदयं दृष्ट्वा यथा समुद्रजलं तरङ्गैः क्षुभितं भवति तथा मालतीमुखचन्द्रं दृष्ट्वा शान्तं सधैर्यमपि माधवमनः उत्कण्ठया चञ्चलं सञ्जातमिति कथयति कामन्दकी यथा-

**"अनुभवं वदनेन्दुरूपागमान्नियतमेष यदस्य महात्मनः।**
**क्षुभितमुत्कालिकातरलं मनः पय इव स्तिमितस्य**
**महोदधेः।।" 3/10 p.।।**

अनेन माधवस्य प्रेमातिशयत्वं व्यज्यते।

नवमे अङ्के माधवः स्वच्छप्रेमजनितविरहवेदनया उन्मादः इव भणति यथा - हे वनवासिनः! भवद्भिः सर्वाङ्गप्रकृतिरमणीयस्य कुलवधूः मालती दृष्टा वा? तस्याः किं जातमिति जानन्ति वा? सा जीवति वा नवा? तस्याः वयोवस्थां ज्ञातुमिच्छन्ति चेत् श्रुण्वन्तु - यस्यां वयोवस्थायां मन्मथः प्रगल्भव्यापारस्सन् चरति, शरीरे तु बालः सन् चरति सा मालती। तद्यथा -
**भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू............।। (मा. मा.** 9/29, P.343)

पुरोदृश्यमानान् अदृश्यमानान् न केवलं मानवान् अपि च पशपक्षादीनपि पृच्छति मालती कुत्र इति। अनेन माधवस्य उन्मादावस्था ज्ञायते। अपि च यौवनावस्थायां देहकान्तिः मानसिकस्थितिः अपि अत्र कविना वर्णिता।

अन्ततो गत्वा इदं वक्तुं शक्यते यत् माधवः लोकोत्तरसौन्दर्ययुक्तः, गुणनिधिः, कलाप्रेमी, एकनिष्ठपत्नीप्रेमी, वीरनायकश्च। शास्त्रीयदृष्ट्या सह धीरप्रशान्तनायकः ।

नायिका मालती-

प्रकरणस्यास्य नायिका मालती। मालत्यां स्त्रीसुलभलक्षाणानि सर्वाणि अस्मिन् प्रकरणे वयं द्रष्टुं शक्नुमः। सा अप्रतिमसौन्दर्यशालिनी, गुणसम्पन्ना, सुशीला, कुलमर्यादारक्षणतत्परा इति ज्ञायते।

सौन्दर्याधिदेवता-





प्रथमे अङ्के माधवः मालतीमवलोक्य एवं ब्रवीति सा सौन्दर्यराशेः अधिदेवता, सौन्दर्यसारसमुदायगृहं, इन्दुकलामृणालज्योत्स्नादयैः एव सा रचिता। तस्याः शरीररचनायाः कर्ता नूनं कामदेवः एव इति।

**सा रामणीयकनिधेरधिदेवता वा**
**सौन्दर्यसारसमुदायनिकेतनं वा।**
**तस्याः सखे ! नियतमिन्दुकलामृणाल-**
**ज्योत्स्नादि कारणमभून्मदनश्च वेधाः।। मा. मा. 1-24**

अनेन मालत्याः सौन्दर्यातिशयः प्रकटितः भवति।

पंचमेऽङ्के अघोरघण्टः मालतीं करालदेव्यै बलिदानं कर्तुमिच्छति तदा माधवः वदति- त्वं संसारममुमसारं कर्तुं प्रवृत्तोऽसि अर्थात् मालतीरूपरत्नं विना संसारोऽयं साररहितः अपि च त्रैलोक्यरत्नं नाशयितुमुद्युक्तोऽसि। अर्थात् सा न केवलमेकस्य लोकस्य रत्नमपितु लोकत्रयस्य रत्नमित्यर्थः। निरतिशयसौन्दर्यविभूषितायाः लोकप्रकाशिकायाः मालत्याः वधेन त्वं लोकं तिमिराच्छन्नं कर्तुमुद्युक्तोऽसि। बान्धवजनं मरणशरणं कर्तुमिच्छसि। कन्दर्पमपि दर्परहितं कर्तुमिच्छसि। जनानां नयननिर्माणं निष्फलं कर्तुमभिलषसि इत्यादि तद्यथा-

**"असारं संसारं परिमुषितरत्नं त्रिभुवनम्।"** 5-30

अनेन मालती सौन्दर्यस्य अधिदेवता इति स्पष्टं भवति।

**कुलमर्यादारक्षणशीला-**

मालती माधवे अनुरक्ता। किन्तु तस्याः पिता भूरिवसुः वृद्धाय नन्दनाय दातुमिच्छति। तं वृद्धं नन्दनं परिणेतुं सा नेच्छति। तथापि पित्राज्ञां न तिरस्कर्तुमिच्छति सा कुलमर्यादारक्षणे कटिबद्धा। सा स्वयं कथयति यत् - प्रतिरात्रं शोडशकलायुक्तः चन्द्रः मां दहतु नाम, कामदेवोऽपि मां दहतु नाम तौ रात्रि-चन्द्रौ मरणात् अधिकं किं करिष्यतः। (कुलमर्यादारक्षणार्थम् अर्थात् मालत्या मरणम् अङ्गीकृतमेवेति तात्पर्यम्) इतोऽपि वदति- मम तु मम पिता प्रियः, प्रशंसनीश्च, पुनः निर्मलकुलप्रसूता मम जननी, प्रिया श्लाघ्या च, पुनः

निष्कलङ्कं कुलं मम कृते प्रियं श्लाघ्यं च भवति। न प्रियः माधवः, न प्रियः मम प्राणाः इति। तद्यथा-

**ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी**
**दहतु मदनः किं वा मृत्योः परेण विधास्यतः**
**मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया**
**कुलममलिनं न त्वेवायं जनो न च जीवितम्।। मा. मा. 2-2**

अनेन मातापित्रोः गौरवरक्षणे, कुलमर्यादारक्षणे च तस्याः कटिबद्धता स्फुटा भवति।

सा मालती मातापित्रोः अज्ञामुल्लङ्घ्य कदापि प्रियाय आत्मसमर्पणं कर्तुमुद्युक्ता न भवति, इतिवृत्तगत संघटनानुसारेणैव मालतीमाधवयोः विवाहः सम्पद्यते।

**प्रियोपासिका-**

पञ्चमाङ्के एकस्मिन् सन्दर्भे कपालकुण्डलामालतीमुद्दिश्य एवं वदति-त्वं मृत्युलोकं गमिष्यसि अतः तव प्रियं स्मरेति इति। तद्यथा

कपालकुण्डला--

'तं भद्रे! स्मर दयितोऽत्र यस्तवाभूद्द्य त्वं त्वरयति दारुणः कृतान्तः।। 5-24 पृ- 198

तदा मालती- हा देव ! माधव! परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः। न खलु स उपरतो यस्य वल्लभः स्मरति। इति

अत्र 'देव' इत्यनेन त्वमेव मम इष्टदेवतास्वरूपः इति तन्मरणदशायामपि त्वामेव स्मरामि, जन्मान्तरे वा त्वत्समागमो मे भूयादिति भावः।

अनेन मालती माधवं स्वकीयप्रेम्णः परां काष्ठां मन्यते इति ज्ञायते।

**स्नेहशीला-**

तत्तत्सन्दर्भेषु स्वसखीभिस्सह मालत्याः सरलव्यवहारेण तस्याः मैत्री व्यज्यते। एकदा मालत्याः प्रियसखी लवङ्गिका नन्दनस्य गृहं याति। तस्याः पुनरागमने विलम्बो जायते। तदा तस्यै प्रियस्य प्रियवचनान्यपि न रोचन्ते स्म। अत्यन्तं व्याकुला भवति।





पुनः एकस्मिन् सन्दर्भे मालत्याः वियोगदुःखमसहमानाः भूत्वा कामन्दकी, मदयन्तिका लवङ्गिका च मर्तुमुद्युक्ताः भवन्ति। अनेन तस्याः स्नेहशीलता व्यज्यते।

संक्षेपेण इदं वक्तुं शक्यते यत् मालती अतिलोकसौन्दर्यराशिः, प्रेमोपासिका, कुलगौरवरक्षणतत्परा, गम्भीरा, कष्टसहनशीला इति। अपि च तस्याः चरित्रचित्रणे कविः सफलो जातः।

श्रृङ्गाररसप्रधानानि नाटकानि प्रणीतवतां कवीनां मध्ये भवभूतेः पन्थाः विलक्षणो, विचित्रश्च भवति। यद्यपि कालिदासादयः महान्तः कवयः सकलसहृदयहृदयरञ्जनपराणि श्रृङ्गाररसप्रधानानि नाटकानि निर्ममुः। तथापि तदीयपात्रचित्रणं नैवं विधं भवति, यद्विधं भवभूतेः पात्रचित्रणम्। उत्तररामचरिते सर्वोत्तमचरितस्य नायकस्य धीरोदात्तस्य सीतैकलग्नमानसस्य प्रेम्णः पराकाष्ठां व्यञ्जयितुं रामचन्द्रस्य मूर्च्छां बहुशः वर्णयति। तथैव मालतीमाधवे अस्मिन् प्रकरणे श्रृङ्गारनायकस्य माधवस्य, मालत्येकलग्नमानसस्य धीरशान्तस्य वहुवारं मूर्च्छां वर्णयति। तेन समालोचयितुं शक्यते भवभूतेर्मनसि स्वच्छप्रेमजनितविरहस्य पराकाष्ठा मूर्च्छारूपा तादृशीस्थितिः इति। अर्थात् विरहे तादृशीं स्थितिं यत् जनयति तेनैव प्रेम्णः गाढत्वं स्वच्छत्वं च ज्ञायते इति कविरभिप्रैति।

एवमस्मिन् प्रकरणे कविर्भवभूतिः प्रकरणनायिकानायिकयोः मालतीमाधवयोः स्वरूपस्वभावादिकं सम्यक् निर्माय श्रृङ्गाररसं च समीचीनविधया पुष्टिं नीत्वा सहृदयहृदयानि रञ्जयतीति निर्विवादोऽयमंशः। सर्वदा श्लाघनीयोयं कविः, सर्वोत्तमश्च प्रकरणमिदम् इति वक्तुं न सन्दिहते विपश्चितः।

*****************

# आश्चर्यचूडामणौ नायको नायिका च

-डॉ. श्रीजा के. पी.
सहायकाचार्या,
सर्वकारीयसंस्कृतकलाशाला,
तृप्पुणित्तुरा।

केरलीयकविना शक्तिभद्रेण रचिते आश्चर्यचूडामणिनाटके रामायणस्य अरण्यकाण्डादारभ्य युद्धकाण्डपर्यन्तं प्रतिपादिता कथा वर्णिता। अत्र नायकः श्रीरामः नायिका सीता च। इतिवृत्ते, पात्रचित्रणे, रसपोषणे सर्वथा रङ्गावतरणानुरूपरचनावैभवे च अस्य नाटकस्य अनुपमं प्राधान्यमस्ति। अस्मिन् प्रबन्धे नायकस्य रामस्य नायिकायाः सीतायाश्च पात्रचित्रणं कथं ग्रन्थकृता कृतमिति किञ्चित् विचार्यते।।

**नाटककर्ता शक्तिभद्रः।**

अयं केरलीयकविः भवति। अस्य आश्चर्यचूडामणिर्नाम नाटकं दाक्षिणात्यनाटकेषु सर्वप्रथममिति कथ्यते। अत्र नटी स्थापनाद्वारा अमुं वृत्तान्तं प्रकाशयति। तथा हि स्थापनायां दाक्षिणात्यस्य नाटककर्तुः शक्तिभद्रस्य आश्चर्यचूडामणेः प्रदर्शनमभिलषति इति सूत्रधारस्य तात्पर्यं ज्ञात्व नटी वदति। यथा-आर्य अत्याहितं खल्वेतत्, आकाशं प्रसूते पुष्पम्, सिकताः तैलमुत्पादयन्ति यदि दक्षिणस्याः दिशः आगतं नाटकनिबन्धनम्।।[1]

अनेन तस्मिन् काले दाक्षिणात्येषु नाटकरचना विरला इति सूच्यते। तत्रैव सूत्रधारेण 'उन्मादवासवदत्ताप्रभृतीनां काव्यानां कर्तुः कवेः शक्तिभद्रस्यैवं प्रज्ञाविलासितम्'[2] इत्युक्त्या शक्तिभद्रेण रचिताः अन्ये साहित्यग्रन्थाश्च सन्तीति प्रतिपादितम्। केरलीयसंस्कृसाहित्य-चरित्रकारैः उल्लूर. एस्. परमेश्वरय्यर्महानुभावेन,[3] वटक्कूर्- राजराजवर्मणा च[4], डा. कुञ्जुण्णिराजेन च[5] केरलेषु कोळं जिल्लायां कोटुमण्ग्रामे कुन्नत्तूर्देशे, 'चेन्नीक्करस्वरूपम्' इति ब्राह्मणकुटुम्बे तस्य जन्मेति, तस्य यथार्थनाम शङ्करः इत्यासीदिति च स्थाप्यते। केरलेषु अस्य विख्यातिः महती आसीदिति चरित्रकारेण





वटक्कूर्राजेन प्रतिपाद्यते। नटाङ्कुशे शक्तिभद्रमेवं प्रस्तौति इति तेन प्रतिपादितमेवम्-

'यत्कृतं नाटकं चूडामणिश्चूडामणिस्सताम्।
स कस्यैव न मान्योऽयं शक्तिभद्रो महाकविः।।[6] इति।

**आश्चर्यचूडामणेः इतिवृत्तम् -**

रामायणस्य कथा एव ईषद्भेदेन अत्र इतिवृत्तत्वेन स्वीकृतम्। अत्र प्रतिपादिताः रामायणकथासन्दर्भाः एते -- रामलक्ष्मणयोः सीतायाश्च वनवासः, शूर्पणखायाः मोहिनीरूपं धृत्वा रामसमीपम् आगमनम्, अनन्तरं लक्ष्मणेन अपमानितायां शूर्पणखायां रावणस्य रामरूपं धृत्वा सीतायाः समीपम् आगमनं, सीतायाः अपहरणं, अन्ते सुग्रीवहनुमतोः साहाय्येन रावणवधः, सीताप्राप्तिः, सीतायाः अग्निप्रवेशः च वर्णिताः। प्रजारञ्जकत्वमेव राज्ञः धर्मं इत्यादयः अद्भुतवीरश्रृङ्गारादिभिः रसैः अत्र प्रतिपाद्यन्ते। तत्र अङ्कनामानि यथा-पर्णशालाङ्कः, शूर्पणखाङ्कः, मायासीताङ्कः, जटायुवधाङ्कः, अशोकवनिकाङ्कः, अङ्गुलीयाङ्कः, अन्ते सीतायाः अग्निप्रवेशकाङ्कश्च। रामलक्ष्मणौ सीतया सह वने पर्णशालां निर्माय वसतः। तत्समये ललितवेषधारीणी मोहिनीरूपा शूर्पणखा काममोहिता सती रामम् अनुरागपुरस्सरम् उपगच्छति। रामेण लक्ष्मणसमीपं प्रेषिता सा तत्पुरस्सरमपि स्वविलासान् प्रकटयति। विलासिन्याः तस्याः दर्शने लक्ष्मणस्य हृदयं चञ्चलितमपि रामसहोदरस्य स्वस्य एतच्चित्तावस्था नोचिता इति मनोधैर्यं प्रतिगृह्णाति। शूर्पणखया वारं वारं प्राप्तयोः रामलक्ष्मणयोः अस्थिरतां दृष्ट्वा कुपिता सा स्वस्य मोहिनीरूपं विहाय राक्षसरूपं स्वीकरोति। तद् दृष्ट्वा लक्ष्मणः तस्याः कर्णनासिकं चिच्छेद।।

खरदूषणादिराक्षसानां वधानन्तरं सन्तुष्टाः महर्षयः श्रीरामाय चूडामणिम्, कराङ्गुलीयञ्च, लक्ष्मणाय कवचं ददुः। अस्य चूडामणेः प्राधान्येन 'आश्चर्यचूडामणिरिति' नाम कविना दत्तम्। आश्चर्यभूतचूडामणिर्यस्मिन् प्रतिराद्यत्वेन अङ्गीकृत इति"[7] इति अन्वर्थं नाम।।

**नायकः -**

रूपकेषु नायकस्य लक्षणं व्याख्यातृभिः बहुधा उक्तम्। नाटके नायकः धीरोदात्त एव भवितुमर्हतीति भरतेन प्रतिपाद्यते-"प्रख्यातोदात्तनायकं चैव।।"[8] किन्तु रूपकेषु प्राधान्येन राजानः नायकाः, ते धीरललिताः अपि यथा - उदयनमहाराजादयः। तदुक्तं नाट्यदर्पणे - ख्याताद्यराजचरितम् "।।[9] "राजेति क्षत्रियमात्रं न पुनरभिषिक्त एव।"। देवाः नायकत्वेन रूपकादिषु न भवेयुरिति तस्य मतम्। धनञ्जयेन प्रतिपादितमेवम्-

**"अभिगम्य गुणैर्युक्तो धीरोदात्तः प्रतापवान्।**
**कीर्तिकामो महोत्साहासहरुम्यास्त्राता महीपतिः।।**
**प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः।।"।**[10]

नाट्यशास्त्रानुसारं नाट्यदर्पणानुसारं च नाटकेषु धीरोदात्तादिप्रभेदेषु अन्यतमः नायकः भवितुमर्हति। साहित्यदर्पणे एवम्-

**'प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।**
**दिव्योऽथ दिव्याऽदिव्यो वा गुणावान्नायको मतः।।'।**[11]

अत्र आश्चर्यचूडामणौ नाटके रामः धीरः तथा दयालुश्च। सः उत्तमः भवति। लोके कः वीर्यवान् श्रुतवान् इति वाल्मीकेः प्रश्नस्य उत्तरद्वारा नारदेन तस्य कृते रामस्य माहात्म्यं वर्णितम्। तादृश एव अत्रापि नायकः।
अत्र प्रथमाङ्के रामेण कैकेयीसाहाय्येन वनवासलब्धिः इत्युच्यते। रामः—

'मार्गे निर्वृतिमार्गमार्गणपरानाराधयन्तो मुनीन्
स्वैरं सेवितितीर्थसिन्धुपयसी दूरं निरस्ताधयः।
मात्रा लक्ष्मण ! केकयेन्द्रसुतया व्याजेन नीता वयं
स्वामुत्सृज्य धुरं भुवो मुनिवनं यातव्यमिक्ष्वाकुभिः।।" इति।

एतच्छ्रुत्वा लक्ष्मणेनोच्यते - "सत्यमाह लोकः न सत्यगुणा गुणवान् "।[12] इति।

रावणनिग्रहावसरे रामस्य वीरशूरत्वादिस्वभावप्रकटनं तु स्वप्रेयसीं सीतां लब्धुमेव। धीरोदात्तस्य प्रथमं लक्षणं-'महासत्त्वो' भवति। तृतीयाङ्के विष्कम्भके ऋषिकुमारेण रामस्य महासत्त्वं कथमिति वर्ण्यते-"तिष्ठतु चिराय, दिवसकरान्वयो यं विभूषयता रामेण खरदूषणकर्णधारां यातुधानकेतुमतीं





जनस्थानतो यमस्थानवर्तिनीं कृतवता कृताः खलु मद्विधानामपि स्वैरसञ्चारक्षमा वनभूमयः इति।।"[13] अत्र खरदूषणादीन् राक्षसान् हत्वा वनप्रदेशान् सञ्चारयोग्यान् कृतवान् राम इति तस्य महासत्त्वगुणं प्रकटयति। एवं सर्वेषां भीतिजनकस्य रावणस्य निग्रहेऽपि।

नायकस्य अन्यत् वैशिष्ट्यं-'गाम्भीर्यम्'। प्रजापरिपालने, पितुः आज्ञानुवर्तित्वे, मातृभक्त्याञ्च अस्य गाम्भीर्यं द्रष्टुं शक्नुमः। प्रजानां सन्तुष्टिरेव राज्ञः महत्त्वमितिं सः विश्वसिति। रावणवधानन्तरं विभीषणस्य हस्ते राजशासनं निक्षिप्य आश्वासभावं प्रकटयति। यथा- "रामः-(विभीषणमवलोक्य) वयस्य!, विभीषण! नगरीं विश, पश्य भर्तृहीनं जनमापाद्य कर्म चोचितम्। व्यसनेषु महत्सु तत्कुलीनं जनमालोक्य समुच्छ्वसन्ति पौराः "।।[14]

पितुः आज्ञानुशीलने जीवितसाफल्यं इति रामः चिन्तयति। लक्ष्मणेन कैकेयीभर्त्सने कृते तं तस्मात् पापकर्मणः निवारयति च। अपरः नेतृगुणः- 'क्षमावान्' इति भवति। सः द्विवारं स्वसमीपमागतां शूर्पणखां प्रति ईर्ष्याभावं न प्रकटयति। स्वसुहृद्भ्यां सुग्रीवहनुमद्भ्यां सदा दयालुः भवति। एवं अन्यः गुणः- 'अविकत्थनः' इति। सः स्ववीर्ये, पाण्डित्ये अन्यगुणेषु च स्वयं प्रशंसां न करोति। सः कर्मण्येव विश्वासमर्पयति, न तु वाचाटोपे। स्वकार्मुकबलेन सीतां प्राप्यते इति तेन आत्मनि विश्वस्यते, तदेव क्रियते च। सीता अपि तं प्रशंसते। अपरः गुणः-'स्थिरः'। रामः सदा स्थैर्यं प्रकटयति। रावणेन सीतायां नीतायां स्वस्य साहचर्यमनुसृत्य सीतान्वेषणे, लङ्काप्रवेशने, रावणनिग्रहे च स्थैर्यपूर्वं प्रवर्तते। स्त्रीणां कृते रामः सदा दयां, सहानुभूतिं आदरञ्च प्रकटयति। शूर्पणखायाः विलासान् दृष्ट्वा तस्याः स्वभावशुद्धौ शङ्कितोऽपि तां प्रति आदरपूर्वं सम्भाषणं करोति। तस्याः यथार्थस्वभावज्ञानाय लक्ष्मणसमीपं तां पुनः पुनः प्रेषयति। सीता पृच्छति एवम् - "सीता - आर्यपुत्र!, ननु तपस्विनीं वालिकां प्रत्यादिशता आर्यपुत्रेण अयं तावज्जनः उत्कण्ठाभाजनं कृतः।
रामः - देवि!, न संसर्गमर्हति कुटुम्बिनां अनर्गलः स्त्रीजनः।
सीता - यद्येवम् अविश्वसनीयो जनः कस्य हेतोः कुमारस्य समीपे प्रेषितः?

राम - देवि! तया सह कुमारस्य सम्बन्धः कुतः? ननु तस्याः प्रत्यादेशव्यवदेशः।।"[15]

अनेन लक्ष्मणेन सा शूर्पणखा कदापि न स्वीक्रियेतेति तस्य दृढविश्वासः अस्ती। कामिनीव आगता सा केवलम् एका सुन्दरी न, राक्षसी भवेदिति रामः प्रथममेव जानाति। तां परीक्षितुमेव लक्ष्मणसमीपं द्विवारं प्रेषयति। तस्मिन्नवसरेऽपि सः तां प्रति आनादरतां न प्रकटयति। ताम् अपनेतुं लक्ष्मणः समर्थः इति मनसि निधायैव तेन तथा कृतञ्च। यदा तस्याः प्रेमाभ्यर्थाना रामेण, लक्ष्मणेन च त्यक्ता तदा सा मोहिनीरूपं विहाय राक्षसस्वरूपं स्वीकरोति। तदानीमेव लक्ष्मणः स्वस्य, सीतारामयोः च रक्षणार्थं तस्याः कर्णनासिकं चिच्छेद।।

मातुः कैकेय्याः विषये रामः आदरभावं कदापि न विमुञ्चति। सीतारामयोः राज्यसुखं त्यक्तत्वा घोरवनेषु कठिनजीवितस्य कारणं कैकेयीमाता एवेति चिन्ता शल्य इव लक्ष्मणस्य मनसि आगच्छति। लक्ष्मणस्य एतन्मनोभावमनुमीय रामः तु एतादृशसुखवासस्य निमित्तकारणं कैकेयीमाता एव इति अतः सा उपालम्भनं नार्हतीति लक्ष्मणाय उपदिशति। किन्तु एतच्छ्रुत्वापि कैकेय्याः अपराधः सोढुं लक्ष्मणेन न शक्तः यया रामस्य राज्याभिषेकः निरुद्धः, यया पितुः मरणकारणं जातम्, सा मातृस्थाने सङ्कल्पयितुमपि नार्हा इति लक्ष्मणमतम्। एतच्छ्रुत्वा रामः कर्णमाच्छादयन् वदति-

"हते राज्ये भवान् भक्त्या प्रत्याचष्टे स्वमातरम्।
अहो सन्तोषबाह्यानामधर्मैकरतं मनः।।"।[16]

सुखभोगेषु आसक्तः जनः स्वमातरमपि त्यजतीति लोकस्वभावम् अत्र परामृश्यते। स्वार्थसुखेषु राज्ञः प्राप्तिर्नास्तीति उक्त्वा राज्यनष्टं नष्टमेव न इति बोधयति। राज्ञः जीवितं न तु आत्मसुखाय अपि तु लोकहिताय इति विशदीकरोति – यथा -

"साधारणी नयविदां धरणिः कलत्र-
मस्त्राणि मित्रमरयः सहजाः सुताश्च।
पापात् परस्य पतनं नरकेषु लाभः





द्वे चामरे च सितमातपवारणं च।।"।[17]

एवं राज्यसिंहासनस्य नाशे दुःखस्यावश्यकता नास्ति, तदर्थं मातरि कैकेय्यां उपालम्भनं न कुर्याः इति लक्ष्मणम् उपदिशति। किन्तु एतादृशदयाशीलोऽपि रामः रावणवधानन्तरं स्वपुरम् आगतां सर्वाभरणविभूषितां सीतां दृष्ट्वा " पुंश्चली" इति तां उपालभते। अत्र सीताम् अनादररूपेणैव सः पश्यति। अधुनातने लोके, साहित्ये च *Feminism* इति नाम्ना विवक्षिते स्त्रीस्वातन्त्र्यचिन्तानुसारं अयं परामर्शः स्त्रीविरुद्धः भवति। सीतायाः स्वत्त्वचिन्तायाम् अस्य पदप्रयोगस्य अत्यधिकं प्राधान्यमस्ति। रामायणे, इतिवत् अस्मिन् नाटकेऽपि सा सदा कुलीनतां, स्वभावपरिशुद्धिञ्च कदापि न विमुञ्चति। तथापि कविना नायकवचसा एतादृशपरामर्शः कृतः इति अक्षन्तव्यः अपराध एव। उत्तमोत्तमेन रामेण एवं वक्तुं नोचितम्। अत्र एवदेव सामाधानं वक्तुं शक्यते यत् राज्ञः रामस्य प्रजापरिपालने, प्रजारञ्जने च अवधानमिति प्रकटयितुमेव। प्रजारञ्जनाय स्वप्रेयसीं सीतामपि त्यक्तुं स सन्नद्धः। रामस्य अस्मिन् कर्मणि तात्पर्यमिति कविः भवभूतिरपि उत्तररामचरिते लिखति-

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।।[18]

सदा प्रजारञ्जकः राजा श्रीरामः समुदायभीत्या, राज्ञः स्वालित्यभीत्या च सीतायाः परिशुद्धौ शङ्कितोऽपि 'पुंश्चली' इति तथाविधां पतिव्रतां संवोधयितुं उद्युङ्क्तः इति रामस्य न्यूनता न भवेदिति मनसि निधाय आदौ स्थापनायां सूत्रधारवचसा सूचितम्-

"अभिरञ्जिनीं जनानां सहायसाध्यां गुरूपदेशेन।
धुरमुद्वहामि गुर्वीं नृप इव भरतादिभिर्वोढाम्।।"[19]

एवं जनरञ्जकत्वमेव राज्ञः प्रधानधर्मं इति अमुना नाटकेन कविना स्थाप्यते। एवं कविः सीतारामयोः परस्परदृढानुरागेण समं, प्रजाक्षेमतत्परस्य राज्ञः कथया च अस्मान् आस्वादनस्य परां कोटिं प्रापयति।

**नायिका –** अत्र नायिका सीता भवति। सा सदा स्वस्वभावमहिम्ना प्रेक्षकाणामादरं प्राप्नोति। सा प्रौढा नायिका भवति। नाटकस्य आशयस्य शोभाजनकत्वे अस्याः अतीवप्राधान्यमस्ति। सर्वेषु अङ्केषु अस्याः भागभाक्त्वमस्तीति अभिनये अस्य कथापात्रस्य अतीवप्राधान्यमस्ति। अत्र सीता शूर्पणखाविषये सहानुभूतिं प्रकटयति। तत्र घोरवने रामेण, लक्ष्मणेन च परित्यक्तायाः तस्याः निस्सहायतां विचिन्त्य सा आकुला जाता। स्वस्य भर्तरि शूर्पणखा अनुरागिणी भवतीति ज्ञाते अपि कोपभावं न प्रकटयतीति अस्याः निस्वार्थप्रेम्णः, मानविकमूल्यस्य च उत्तमोदाहरणमेव। मारीचं अनुगच्छतः रामस्य दीनस्वरं श्रुत्वा लक्ष्मणस्य औदासीन्ये रामायणे इव अत्रापि सा कातरताम्, स्त्रीसहजचापाल्यं च प्रकटयति।।

स्त्रीणां रक्षकाः स्त्रियः एवेति सा उच्चैस्तरं स्थापयति। सीतायाः संरक्षणं विशङ्क्य लक्ष्मणः रामस्य साहाय्यार्थं गन्तुं वैमनस्यं प्रकटयतीति दृष्ट्वा सा वदति- स्त्रियः स्वयं रक्षन्ते इति। यथा-

सीता-'समाधी रक्षति स्त्रीजनं न बाणाः।।[20] (आश्चर्यचूडामणिः- तृतीयोऽङ्कः ) तत् सा रावणगृहे अनाथा अपि, निस्सहायावस्थायामपि स्वस्य स्थैर्यं न विमुञ्चति, त्रैलोक्याधिपतेः रावणस्य पुरतः कातरतां न प्रकटयति च। सा स्त्रीशक्तेः यथार्थोदाहरणं भवति।।

**उपसंहारः-**

केरलेषु प्रचलितेषु संस्कृतनाटकाभिनयेषु 'कूटियाट्टम्' इति नाम्ना विख्यातेषु आश्चर्यचूडामणेः प्राधान्यमतिमहत् इत्यनेन रङ्गावतरणाय उचितमिदं रूपकमिति सुविदितं केरळीयानाम्। प्रत्यङ्कं कथम् अभिनयो भवेदिति दृष्ट्वैव अवगन्तव्यम्। अत एव नायक इव नायिकापि अस्मिन् रुपके समान रुपतां भजते।

**सूचनाः**

1 आश्चर्यचूडामणिः- स्थापना
2 आश्चर्यचूडामणिः- स्थापना
3 केरलसाहित्यचरित्रम्-उळ्ळूर्- पृष्ठम्-131





4 केरलीयसंस्कृतसाहित्यचरित्रम्-वटक्कंकूर् राजराजवर्मा
5 The contribution of Kerala to Sanskrit literature- page... 209
6 केरलीयसंस्कृतसाहित्यचरित्रम्-वटक्कंकूर् राजराजवर्मा
7 The contribution of Kerala to Sanskrit literature- page... 209
8 नाट्यशास्त्रम्-अध्यायः-24
9 नाट्यदर्पणः-पृष्ठम्-17
10 नाट्यदर्पणः-पृष्ठम्-17
11 साहित्यदर्पणम्- षष्ठाङ्कः-श्लोक.9
12 आश्चर्यचूडामणिः- प्रथमाङ्कः
13 आश्चर्यचूडामणिः- तृतीयोङ्कः
14 आश्चर्यचूडामणिः - सप्तमाङ्कः
15 आश्चर्यचूडामणिः - प्रथमाङ्कः
16 आश्चर्यचूडामणिः -द्वितीयोङ्कः
17 आश्चर्यचूडामणिः - प्रथमाङ्कः
18 आश्चर्यचूडामणिः - प्रथमाङ्कः
19 आश्चर्यचूडामणिः - स्थापना
20 उत्तररामचरितम् -प्रथमाङ्कः

# मृच्छकटिकप्रकरणे नायको नायिका च

-डा.राकेशकुमारजैनः
सहायकाचार्यः, साहित्यविभागः,
रा.सं.सं, जयपुरपरिसरः।

1. मृच्छकटिककारशूद्रकस्य परिचयः
2. मृच्छकटिकप्रकरणस्य परिचयः
   - i. मृच्छकटिकमिति नामकरणस्यौचित्यम्
   - ii. मृच्छकटिककथाया आधारस्रोतस्तद्विश्लेषणञ्च
   - iii. मृच्छकटिकस्य सङ्क्षिप्तं कथानकम्
   - iv. रससौन्दर्यम्
   - v. अलङ्कारयोजना
   - vi. वर्णसौष्ठवं भाषाशैली च
   - vii. प्रकरणदृष्ट्या मृच्छकटिकम्
3. मृच्छकटिकप्रकरणस्य नायकः
   - i. धीरप्रशान्तो नायकः चारुदत्तः
   - ii. चारुदत्तस्य व्यक्तित्वम्
   - iii. अतिशयदयालुरुदारचित्तश्च
   - iv. शरणागतरक्षकः सत्यवक्ता च
   - v. धर्माचरणपरायणो भाग्यवादी च
   - vi. प्रतिष्ठाप्रेमी कलाप्रेमी च
   - vii. आदर्शप्रेमी आदर्शमित्रश्च
   - viii. पत्नीप्रेमी पुत्रस्नेही च
4. मृच्छकटिकप्रकरणस्य नायिका – वसन्तसेना

## 1. मृच्छकटिककारशूद्रकस्य परिचयः

विविधविद्याविभाविभावितान्तःकरणो महाकविशूद्रकः सूर्य इव स्ववैदुष्यप्रकाशने निखिलमपि संस्कृतसाहित्यसंसारं प्रकाशयतितराम्। एतत्कविकृतस्य मृच्छकटिकस्यैव प्रस्तावनायामभिहितं यदसौ महाकवी राजा





शूद्रको जात्या द्विजोऽवर्तत। असौ सङ्ग्रामप्रियो राजाऽऽसीदतो विद्वद्भिरत्र 'द्विज' इति शब्दस्यार्थः 'क्षत्रिय' इति विहितः। तत्रैव तद्विषये एतदप्यभिहितं यदसौ गजराजगतिश्चकोरनेत्रः, परिपूर्णेन्दुमुखः, सुघटितशरीरः, अगाधबलसम्पन्नः, काव्यकलाकुशलो द्विजेषु श्रेष्ठः प्रसिद्धश्चासीत्, तद्यथा –

**द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च।**
**द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्गाधसत्वः।।**[1]

एतत्कवेः प्रतिभा बहुमुखी आसीत्। असौ ऋग्वेदे, सामवेदे, गणिते, चतुषष्टिसङ्ख्याकायां नृत्यगीतादिरूपायां विद्यायां, नाट्यकलायां हस्तिशिक्षायां च निष्णात आसीत्। शिवप्रसादादयं तत्त्वज्ञानमलभत। अयं हि विलक्षणो विचक्षणो महाबलश्चासीत्। महद्भिर्गजैः बाहुयुद्धमेतस्य स्वीयं वैशिष्ट्यम्। असौ प्रमादरहितः तपोनिष्ठश्चासीत्। एतेन अश्वमेधयज्ञोऽपि कृतः। पर्य्यन्ते निजपुत्राय राज्यं प्रदाय दशदिनाधिकशतवर्षात्मकं-मायुर्यापयित्वेह जगत्यसावग्निं प्राविशत्।[2]

मृच्छकटिकस्य शूद्रककर्त्तृत्वे केचित् सन्देहं कुर्वन्ति, किन्तु आधुनिकगवेषणाभिः प्रमाणितमिदं यन्मृच्छकटिकस्य प्रणेता महाकविशूद्रक एव। महाकविशूद्रकं केचन दाक्षिणात्यं केचन महाराष्ट्रीयं केचन च उज्जैननगरीयं मन्वते। कालविषये समीक्षकैः विचार्य निर्णीतं यत्- पञ्चमशताब्द्यां षष्ठशताब्द्यां वा अमुष्य स्थितिकालस्वीकरणं युक्तिसङ्गतं प्रतिभाति। कवे-रेका एव रचना दृष्टिपथमायाति–'मृच्छकटिकम्' इति प्रकरणम्। दण्डिवामनाद्यनुसारं कवि-शूद्रकस्यान्या अपि रचना वर्तन्ते, किन्तु साम्प्रतिके समुपलब्धे संस्कृतवाङ्मये नैव दृश्यन्ते ताः।

## 2. मृच्छकटिकप्रकरणस्य परिचयः

i. **मृच्छकटिकमिति नामकरणस्यौचित्यम्** –प्रकरणस्य मृच्छकटिकस्य परिचयप्रसङ्गे सर्वप्रथमं तन्नामकरणस्यौचित्यविचारः परमावश्यकः,तत्रापि च प्रथमं व्युत्पत्तिर्विचार्या। एतस्य व्युत्पत्तिरित्थं कर्तुं शक्यते –"मृदः शकटं मृच्छकटम् ,मृच्छकटमधिकृत्य कृतं प्रकरणं मृच्छकटिकम्" इति। क्रीडनकाय रोदनपरायणं वालकं

रोहसेनं प्रसादयितुं वसन्तसेनया स्वाभूषणानि शकटे निहितानि। अधिकरणिकेन चारुदत्ताभियोगस्य प्रत्यक्षं प्रमाणम् अपि आभूषणैरेव गृहीतम्। शकटनिक्षिप्त-अलङ्कारैरेव अधिकरणिको निर्णीतवान् यत् चारुदत्तः वसन्तसेनां हतवानिति। प्रकरणेऽस्मिन्नतीव महत्त्वपूर्णेयं घटना। मृच्छकटिकस्य षष्ठाङ्के रदनिका )चारुदत्तस्य दासी (क्रीडनार्थं रोहसेनाय मृत्तिकाशकटं ददाति, किन्तु स ग्रहीतुं नेच्छति ,प्रतिवेशे दृष्टं स्वर्णशकटं ग्रहीतुं दुरागृह्णाति च। नैतावदेव ,अपि तु स्वर्णशकटे अलब्धे असौ रोदिति। यदैव वसन्तसेना तद्रोदनकारणं जानाति सा स्वाभूषणानि अवतार्य स्वर्णशकटं रचयितुं ददाति। तया तं प्रसादयितुमित्थं क्रियते।

अत्र प्रश्नोऽयं निसर्गतो जागर्ति यद्यदा सुवर्णशकटस्यापि चर्चाऽत्र आगता, तर्हि "सुवर्णशकटिकम्" इति तन्नाम कथं न कृतम्? अथवा "वसन्तसेनाचारुदत्तम्" इत्येव अभिधानं कथं न विहितम्। इदं नामद्वयमपि कर्तुमशक्ष्यत, परं 'नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्' इति साहित्यदर्पणोक्तनियमानुसारं नाटकनाम्ना गर्भितार्थप्रकाशकेन भाव्यम्। कृतेऽप्युपर्युक्ते नामद्वये चमत्कारो नाऽभविष्यत्। अत एव मृच्छकटिकमिति नाम सर्वथा युक्तिसङ्गतम्।

स्वर्णशकटापेक्षया मृच्छकटम् असन्तोषं व्यनक्ति। एतेन नाटकप्रगतौ साहाय्यं लभ्यते। व्यवहारदौष्ट्य-खलस्वभाव-भवितव्यादिभ्यः कथानकं समाकर्षकं जायते। सांसारिक-स्थितिभ्यः असन्तुष्टा जनाः प्रायशः अन्येभ्य ईर्ष्यन्ति, कष्टानि प्राप्नुवन्ति च। सद्गुणैः स्वोन्नतये प्रयत्नस्तु समीचीनः किन्तु अन्येषाम् उन्नत्येर्ष्या हानिकरी। संसारे स एव ससुखं स्थातुं शक्नोति यः स्वपरिस्थित्या सन्तुष्टः सन् परेषामुन्नतिं विलोक्य हर्षमनुभवेत्। रोहसेनः स्वमृच्छकटेन असन्तुष्टो वर्तते, स्वर्णशकटञ्च वाञ्छति। अयमेव एको दोषो येनासौ स्वस्य पितुश्चानेकासां विपदां हेतुर्जायते। असन्तोष एतस्य नाटकस्य मूलम्। अन्येषु मुख्यपात्रेषु अपि अयं विवर्द्धमानो विलोक्यते। वसन्तसेना शकारापेक्षया चारुदत्ते स्निह्यति। चारुदत्तश्च धूतातिरिक्तां वसन्तसेनां स्वप्रेयसीं





कर्तुमिच्छति। इत्थं वर्द्धमानोऽसन्तोषो रूपकस्य कथानकं पुरस्करोति। प्रथमदृष्ट्या बालकस्यायं दुराग्रहो लघीयसी घटना वर्तते, किन्तु रूपकाभिधानदृष्ट्या घटनेयं परं महत्त्वं धत्ते, इत्यत्र न कस्यचित् धीजुषो वैमत्यम्।

ii. **मृच्छकटिककथाया आधारस्रोतस्तद्विश्लेषणञ्च** –किमपि कथानकं कुतश्चित् प्रेरणां प्राप्यैव जनिं लभते। कथा-नाटक-उपन्यासादीनां कवितानिबन्धादीनाञ्च उद्भवे कल्पनातिरिक्तं मूलतस्तदुद्गमस्थलं किमप्यवश्यमेव भवति। एतदाधार इतिहासः सामाजिकघटनाचक्रञ्च भवति ,यदाधृत्य तदीया पृष्ठभूमिर्निर्मीयते।

यद्यपि मृच्छकटिकस्य कथासाम्यं दण्डिनो दशकुमारचरितेन, सोमदेवस्य कथासरित्सागरेण, कालिदासस्य अभिज्ञानशाकुन्तलेन सह किञ्चिद्रूपेण वर्तते किन्तु सर्वेऽपि विद्वांस एकमत्येन महाकविभासस्य दरिद्रचारुदत्तं मृच्छकटिककथामूलं मन्यन्ते। दरिद्र-चारुदत्तस्य चतुर्थाङ्के वसन्तसेना मदनिकां शर्विलकेण सह सम्प्रेषयति। ततश्च स्वां चेटीमाहूय निजस्वप्नं प्रकाशयति। स्वप्नमाकर्ण्य चेटी ब्रवीति – 'प्रियं मे अमृताङ्कं नाटकं संवृत्तम्'। तदनन्तरं वसन्तसेना आभूषणैः सह चारुदत्तगृहं गन्तुम् आलपति। चेटी चानुकूलां वेलां विज्ञाय समर्थयन्ती गन्तुमुद्यता भवति। वसन्तसेना च परिहासेन निर्भर्त्स्य तां कथयति – 'हताशे ! मा खलु वर्धय'। ततश्चेटी वदति – 'एत्वेत्वज्जुका'। अत्रैव नाटकसमाप्तिर्भवति।

भासकृतस्य चारुदत्तस्य हस्तलिखितग्रन्थस्य चतुर्थाङ्के लिखितमस्ति– 'अवसितं चारुदत्तम्' इत्येतदाधारं मत्त्वा नाटकसमाप्तिरत्रैव मन्यते। अन्ये विद्वांस एतदपूर्णं मन्यन्ते कथयन्ति च यदत्रैकोऽपरोऽङ्कोऽवश्यमेव भवेत्। मृच्छकटिके ग्रन्थीर्मोक्तुं प्रयासः कृतः। अन्यनाटकानीव केवलं नायकनायिकयोः प्रेमकथावर्णनमेवैतस्य नास्ति मुख्यमुद्देश्यम्, प्रत्युत विलक्षणरीत्या अस्य अद्भुतत्व-सुखान्तत्वादिसम्पादनमुद्देश्यं वर्तते।

iii. **मृच्छकटिकस्य सङ्क्षिप्तं कथानकम् –**

मृच्छकटिकं दशानामङ्कानामेकं प्रकरणम्। अत्र चारुदत्त-वसन्तसेनयोः प्रणयस्य कल्पिता कथा वर्णिता। सहैव च महाकविना पालकगोपालकार्यकादीनां कथा योजिता।

**प्रथमाङ्के** विदूषकः चारुदत्तमित्रचूर्णवृद्धद्वारा प्रेषितं प्रावारमादाय आगच्छति। चारुदत्तश्च विदूषकं चतुष्पथे मातृभ्यो बलिमुपाहर्तुं प्रेरयति किन्तु विदूषको रात्रौ चतुष्पथे गमनाद् बिभेति। अतः चारुदत्तः तेन सह रदनिकां प्रेषयति। अत्रैव च राजमार्गे वसन्तसेनाम् अनुकुर्वन्तः शकारवटचेटा आव्रजन्ति। शकारस्य कथनेन वसन्तसेना ज्ञातुं प्रभवति यत् चारुदत्तस्य गृहसविधे एव सा विद्यते। इत्थं शकारात् आत्मानं रक्षितुं वसन्तसेना चारुदत्तगृहं प्रविशति। इतश्च रदनिकामादाय मैत्रेयो मातृबलिं दातुं गच्छति। तत्र च शकारो रदनिकां वसन्तसेनां मत्वा धरति, मैत्रेयस्तं भर्त्सयति। वसन्तसेना चारुदत्तगृहं प्रविश्य आत्मानं रक्षति स्वाभूषणानि तत्रैव न्यासत्वेन स्थापयति च। चारुदत्तस्तां तद्गृहं प्रापयति। अत्रैवाङ्के अयमपि सङ्केतो लभ्यते यद् वसन्तसेना कामदेवायतनोद्याने चारुदत्तमवलोक्य तस्मिन्ननुरक्ता।

**द्वितीयेऽङ्के** प्रातर्घटनाद्वयं घटते। संवाहकः पाटलीपुत्रस्यैकः सभ्यो नागरिक आसीत्। भाग्यविपर्य्येण असौ उज्जयनीमागत्य संवाहकस्य कार्यं शिक्षित्वा चारुदत्तस्य भृत्यो जायते। चारुदत्ते निर्धनतां गते असौ द्यूतक्रीडको जातः। एकदा द्यूते पराजितः सन् पलायते। द्यूतकरो माथुरश्च तमनुकुर्वन्तौ आगच्छतः। वसन्तसेना स्वाभूषणानि प्रदाय संवाहकं मोचयति। संवाहको विरक्तः सन् बौद्धभिक्षुर्जायते। वसन्तसेनाया उन्मत्तो गजो मार्गे तं धरति, तस्याः सेवकः कर्णपूरकश्च तं गजात् मोचयति। फलतश्चारुदत्तः कर्णपूरकाय पुरस्कारस्वरूपं स्वप्रावारं यच्छति।

**तृतीयाङ्के** चारुदत्तो मैत्रेयश्च सङ्गीतमाकर्ण्य आगच्छतः। तौ च गृहमागत्य शयाते। इतो मदनिकां दासतापाशात् मोक्तुं शर्विलकश्चारुदत्तगृहे चौर्यं कृत्वा वसन्तसेनाया आभूषणानि नयति।

**चतुर्थाङ्के** प्रातःकाले शर्विलकः आभूषणमादाय मदनिकानिकटमागच्छति। इमान्याभूषणानि चारुदत्तगृहात् चोरितानीति ज्ञात्वा मदनिका दुःखाकुला सती





वसन्तसेनायै दापयति। वसन्तसेना मदनिकां सेवामुक्तां करोति। ततश्च चारुदत्तस्य स्त्री धूता स्वकीयां रत्नावलीं चारुदत्ताय ददाति। चारुदत्तश्च विदूषकद्वारा वसन्तसेनाया गृहे सम्प्रेषयति।

**पञ्चमाङ्के** वसन्तसेना चेटीविटाभ्यां साकं चारुदत्तं प्रत्यभिसरति। दुर्दिनं घनान्धकारः, मेघानां गर्जनम् वर्षाणां विद्युताञ्च भयङ्करत्वं समयं भीषणमकुर्वन्। चारुदत्तस्तां प्रतीक्षमाणो वर्तते। सा आर्द्रशरीरा तत्र प्राप्नोति रात्रौ विश्राम्यति च।

**षष्ठाङ्के** प्रातःकाले चारुदत्तः पुष्करण्डकनामकमुद्यानमागच्छति। इतश्च रदनिका चारुदत्तस्य पुत्रं रोहसेनम् वसन्तसेनायाः पार्श्वे आगच्छति। रोहसेनः स्वर्णशकटार्थं दुरागृह्णाति। वसन्तसेना स्वाभूषणानि तत् शकटे आरोपयति। सापि च पुष्करण्डकोद्यानं गन्तुं प्रस्तुता भवति, किन्तु प्रमादवशतः शकारस्य याने उपविशति। तदानीमेव पालकद्वारा बन्दीकृतः आर्यकः पलाय्य आगच्छते, चारुदत्तस्य याने उपविशति च। यानचालको वसन्तसेनामुपविष्टां बुध्वा यानं नयति। मार्गे द्वौ रक्षकौ चन्दनको वीरकश्च यानं रुन्धः। चन्दनकः आर्यकं दृष्ट्वा रक्षितुम् आश्णोति। वीरकोऽपि यदा द्रष्टुमिच्छति तदा उभयोर्मध्ये कलहः समारभते।

**सप्तमाङ्के** आर्यकः उद्यानं प्राप्नोति। चारुदत्तस्तं पश्यति सप्रेम तं प्रहिणोति च।

**अष्टमाङ्के** भिक्षुरुद्यानं गच्छति। शकारस्तं ताडयितुम् उद्युङ्क्ते। स कथञ्चिदात्मानं रक्षित्वा पलायते। अस्मन्नेवावसरे संयोगवशतो वसन्तसेना तत्रागच्छति। तां विलोक्य शकारः प्रणयं निवेदयति। तया प्रणये अस्वीकृते असौ तां हत्वा पत्रराशौ निगूहति। बौद्धभिक्षुकस्तत्रागत्य तां पुनरुज्जीवयति।

**नवमाङ्के** शकारो न्यायालये वसन्तसेनाया हत्याभियोगं चारुदत्ते आरोपयति। दुर्दैवात् चारुदत्ते अभियोगः सिद्धो भवति, मृत्युदण्डश्च श्राव्यते।

**दशमाङ्के** चाण्डालश्चारुदत्तं वध्यस्थानं नयति, विदूषकरोहसेनौ चापि तत्र प्राप्नुतः। चारुदत्ताय वधदण्डं दातुमुद्योगं कुर्वति चाण्डाले वसन्तसेनामादाय भिक्षुकस्तत्र प्राप्नोति। इतश्च पालकं हत्वा आर्यको राजा भवति तन्मित्रं

शर्विलकश्च तत्र प्राप्नोति। चारुदत्तस्थाने शकाराय मृत्युदण्डो दीयते, किन्तु चारुदत्तस्तं क्षमते। राजा च वसन्तसेनां वधूशब्देन समलङ्करोति। ततो वसन्तसेनाचारुदत्तयोर्विवाहो भवति। इत्थं भरतवाक्येन साकं मृच्छकटिकं नाम प्रकरणमिदं समाप्तिमेति।

### iv. रससौन्दर्यम् –

प्रकरणे शृङ्गारः प्रधानम् अन्ये रसाश्चाङ्गभूता भवन्ति। शृङ्गारोऽपि द्विविधः सम्भोगो विप्रलम्भश्च। मृच्छकटिके सम्भोगोऽङ्गी रसो विप्रलम्भकरुणहास्यवीरभयानकप्रभृतयोऽङ्ग-भूताः।

### v. अलङ्कारयोजना –

महाकविना शूद्रकेण मृच्छकटिके पर्यायोक्त-अर्थान्तरन्यास-मालोपमा-उत्प्रेक्षा-व्यतिरेक-तुल्ययोगिता-निदर्शना-अतिशयोक्तिप्रभृतीनाम् अलङ्काराणां बहुधा प्रयोगः कृतः। एतदतिरिक्तमप्यन्येऽलङ्कारा अत्र प्रयुक्ताः सन्ति।

### vi. वर्णसौष्ठवं भाषाशैली च –

वर्णनकलानिपुणेन कविपुङ्गवेन जीवनस्य विभिन्नदशानां हृदयस्पर्शि चित्रणं विहितम्। क्वचिद् दरिद्रतायाश्चित्रणम्, कुत्रचिद् वसन्तसेनायाः कुबेरसदृशसम्पदां वर्णनञ्चातीव मार्मिकं विद्यते। सन्धेः स्वरूपं तद्भेदानां च वर्णनं द्यूतकर्मणो विशदं वर्णनञ्च कवेः सूक्ष्मनिरीक्षणशक्तिमभिव्यनक्ति। मानवरूपवर्णनेऽपि कविना महत् साफल्यमधिगतम्। मृच्छकटिकस्य भाषाशैली महाकविकालिदासापेक्षया सरलतरा वर्तते। कविनात्र या रीतिरनुसृता सा खलु भासकालिदासयोर्मध्यवर्तिनी। भाषायाः प्राञ्जलता समासहीनता विविधपात्रानुकूलता एतस्य प्रकरणस्य स्वीयं वैशिष्ट्यम्।

### vii. प्रकरणदृष्ट्या मृच्छकटिकम् –

समस्तसंस्कृतकाव्यं द्विविधम् – दृश्यकाव्यम्, श्रव्यकाव्यञ्च। दृश्यकाव्यमपि द्विविधम् – रूपकम्, उपरूपकञ्च। तत्र उपरूपकस्य अष्टादशभेदाः रूपकस्य च दश भेदाः प्रोक्ता आलङ्कारिकैः –

**नाटकमथ प्रकरणं भाण- व्यायोग- समवकार-डिमाः।**





**ईहामृगाङ्क-वीथ्यः प्रहसनमिति रूपकाणि दश।।**[3]

प्रकरणस्य स्वरूपं प्रतिपादयता आचार्यविश्वनाथेन साहित्यदर्पणे प्रोक्तम् –

**भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।**
**शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।।**
**सापायधर्मकामार्थपरो धीरप्रशान्तकः।**
**नायिका कुलजा क्वापि , वेश्या क्वापि द्वयं क्वचित्।।**
**तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।**
**कितवद्यूतकारादि-विट-चेटक-सङ्कुलः।।**[4]

(अस्य नाटकप्रकृतित्वात् शेषं नाटकवत् लक्षणम्।)

लक्षणानुगुणं मृच्छकटिकस्य कथानकं लोकाश्रितं कविकल्पितं च वर्तते। सम्भोगशृङ्गारोऽत्र मुख्यरसः अन्ये च अङ्गभूताः विद्यन्ते। अस्य नायको धीरप्रशान्तो विप्रः चारुदत्तः, असौ अतीव दरिद्रः सन्नपि धर्मार्थकामपरायणो वर्तते। अत्र नायिकाद्वयम्– चारुदत्तस्य प्रेयसी वसन्तसेना (वेश्या), चारुदत्तस्य धर्मपत्नी धूता (कुलजा स्त्री), अत एव तृतीयभेदात्मकमेतत्प्रकरणम्। अत्र धूर्त-द्यूतकार-विट-चेटादयोऽपि सन्ति, अतः सङ्कीर्ण-प्रकरणमेतत्। एवं ग्रन्थोक्तलक्षणानुसारं प्रायः सर्वाणि तत्त्वान्यत्र निहितानि सन्ति अत एव वक्तुं शक्यते यत् संस्कृतवाङ्मये प्रकरणस्य सर्वश्रेष्ठोदारणं 'मृच्छकटिकम्' प्रकरणं वर्तते।

## 3.मृच्छकटिकस्य नायकः

### I. धीरप्रशान्तो नायकः चारुदत्तः

मृच्छकटिकस्य नायकः चारुदत्तो विद्यते। असौ सुन्दरः युवा परोपकारी गुणग्राही उदारचित्तः भावुकः पवित्रप्रेमी सत्यवक्ता शरणागतवत्सलः परमक्षमाशीलः वर्तते। एष अमुष्य प्रकरणस्य धीरप्रशान्तनायकः। साहित्यदर्पणे धीरप्रशान्तनायकस्य लक्षणं प्रोक्तम् –

**सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्।**[5]

अर्थात् सामान्यगुणैः त्यागित्वादिभिः नायकसाधारणगुणैः द्विजादिको ब्राह्मणादि-नायको धीरप्रशान्तो भवेत्। नायकस्य सामान्यगुणाः सन्ति –

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षो नुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता।।** [6]

अभिप्रायोऽयं यद्यः खलु त्यागी दाता सर्वस्वदायक इति यावत्, कृती वीरकर्मकुशल इति यावत्, कलीनः सत्कुलोत्पन्नः सश्रीको बुद्धिमान् **सौन्दर्यवानित्यर्थकत्वे रूपशब्देन पौनरुक्त्यापत्तेरतः -**

**लक्ष्मी-सरस्वती-धी-त्रिवर्गसम्पद्विभूतिशोभासु।**
**उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता।।**

इति व्याडिवचनाज्ज्ञानार्थेऽत्र श्रीशब्दप्रयोगः। **धनसमृद्धिमानित्यर्थकत्वे** तु दरिद्रचारुदत्तानामत्र नायकत्वं न स्यात्। रूपं **मनोहरं यौवनं तारुण्यम्** उत्साहः कर्मण्यध्यवसायश्च ते अस्य सन्तीति सः, **रूपयौवनोत्साहवानिति यावत्।** दक्षः अनलसः, अनुरक्ता लोका यस्मिन् सः, **द्वन्द्वान्ते मतुपः** श्रवणात् द्वन्द्वान्ते श्रूयमाणमिति न्यायात्तस्य **प्रत्येकाभिसम्बन्धः। तथा** तेजः परकृतनिन्दाद्यसहिष्णुत्वरूपं तद्वान्, वैदग्ध्यं **चातुर्ययुक्तः, अत्र निगूढाभिप्रायत्वमेव** वैदग्ध्यम्। शीलं सद्वृत्तं तानि अस्य **सन्तीति** सः, एवमादिगुणसम्पन्नो नेता नायको भवति। **एतादृशसामान्यगुणसम्पन्ननो** द्विजादिकः धीरप्रशान्तनायको भवति।

II. **चारुदत्तस्य व्यक्तित्वम्** –

उज्जयिनीनगरे प्रतिष्ठितसम्पन्नपरिवारे चारुदत्तस्य जन्म अभवत्। सः **ब्राह्मणवंशे समुत्पन्नेऽपि** व्यापारादिभिः महद्धनमर्जितवान्। अत एव धनिकेष्वयं **लब्धप्रतिष्ठितः आसीत्।** द्वितीयाङ्के संवाहको वसन्तसेनां प्रति चारुदत्तस्य **परिचयं कारयन् कथयति–** यस्तादृशः प्रियदर्शनः, प्रियवादी, दत्त्वा न कीर्तयति, **अपकृतं विस्मरति** [7]........इत्यादिः। एवमेव कारगृहात् पलायितः आर्यको यदा **प्रथमदृष्ट्या चारुदत्तमवलोकयति** तदा सहसैव तं प्रशंसति – न केवलं **श्रुतिरमणीयो दृष्टिरमणीयोपि,** इति। वसन्तसेनायाः वधापराधे चारुदत्तः **न्यायालये आहूतो भवति तदा न्यायाधीशः** चारुदत्तस्य दिव्याकृतिं दृष्ट्वा मनसि **चिन्तयति यदसौ वधापराधं** नैव कर्तुं शक्यते। सः चारुदत्तस्य स्वरूपं **प्रशंसन्निगदति -**





**घोणोन्नतं मुखमपाङ्गविशालनेत्रं नैतद्धि भाजनमकारणदूषणानाम्।**
**नागेषु गोषु तुरगेषु तथा नरेषु नह्याकृतिः सुसदृशं विजहाति वृत्तम्।।** [8]

तत्रैव न्यायालये वसन्तसेनायाः माता यदा चारुदत्तं प्रथमवारमवलोकयति तदा सा वसन्तसेनायाः प्रेमसमर्पणेन सन्तुष्टा भवति , कथयति च – **अयं स चारुदत्तः। सुनिक्षिप्तं खलु दारिकया यौवनम्।**[9] इति।

चारुदत्तो प्रकरणे यौवनसम्पन्नो वर्तते। प्रथमाङ्के स भ्रमवशात् यदा वसन्तसेनां प्रावारकेन छादयति तदा सा प्रावारकं समाघ्राय स्वगतं चिन्तयति– **अनुदासीनमस्य यौवनं प्रतिभासते..**[10] इति।

III. **अतिशयदयालुरुदारचित्तश्च** –

प्रकरणस्य नायकः अत्यन्तदयालुः परमौदार्यश्च वर्तते। स कदापि कस्मैचिदपि कष्टं न ददाति। चेटद्वारा स्वस्वामिविषये कथितानि वचांसि ध्यातव्यान्यत्र– **सुजनः खलु भृत्यानुकम्पः**[11]। चारुदत्तः स्वसुखाय परान् न क्लिश्नाति, अत एव रात्रौ विलम्वेन शयितां रदनिकां न प्रबोधयति – **अलं सुप्तजनं प्रबोधयितुम्,**[12] इति। आराम-प्रासाद-वेदिकायां सुखेन उपविष्टकपोतदम्पतीमुड्डयितुं यदा विदूषकः प्रयतते तदा तं निषिध्य चारुदत्तः कथयति – **वयस्य ! उपविश, किमनेन ? तिष्ठतु दयितासहितस्तपस्वी पारावतः**[13] ,इति। स्वगृहे वस्तूनि चोरयितुमागतं चोरं प्रत्यपि स औदार्यं प्रदर्शयति, यतो हि असौ जानाति यन्मम गृहे चोरयितुं न किमपि विद्यते, अतः चोरस्य परिश्रमो व्यर्थः सञ्जातः, - सन्धिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः। अत्यन्तदरिद्रतामवाप्यापि चारुदत्त सर्वदान्येभ्यो दातुमिच्छत्येव। कर्णपूराय यदा स उपहाररूपेणाङ्गुलियकं दातुं समुत्सहते किन्त्वङ्गुल्यामङ्गुलीयकमेव न भवति तदा स्वदुकुलमेव प्रददाति – **एकेन शून्यान्याभरणस्थानानि परामृश्य ऊर्ध्वं निःश्वस्यायं ममोपरि निक्षिप्तः..**इति।[14] पञ्चमाङ्के चेटः यदा वसन्तसेनायाः आगमनस्य सूचनां ददाति तदा स नितरां प्रसन्नो भूत्वा तस्मै स्वकीयमुत्तरीयं प्रयच्छति – **भद्र ! न कदाचित् प्रियवचनं निष्फलीकृतम्, तद्गृह्यतां पारितोषिकम्।** [15](इत्युत्तरीयं प्रयच्छति। )।

## IV. शरणागतरक्षकः सत्यवक्ता च

चारुदत्तः स्वप्राणानपि प्रदाय शरणागतं रक्षितुं प्रयतते। यदा कारागृहतः पलायितो आर्यकः चारुदत्तस्य शकटिकायां निलीयितुं प्रार्थयते– शरणागतो गोपालप्रकृतिः आर्यकोऽस्मि। इति तदा आर्यकस्य वचनं श्रुत्वा प्रसन्नः चारुदत्तो भणति –

**विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः। अपि प्राणानहं जह्यां न तु त्वां शरणागतम्।।**[16]

शरणागतरक्षणस्य पराकाष्ठा तु तदा भवति यदा परमशत्रुः शकारोपि तस्य शरणमागत्य तं रक्षार्थं भिक्षते – **तत्किमिदानीमशरणः शरणं व्रजामि?** भवतु **तमेवाभ्युपपन्नवत्सलं गच्छामि। आर्य चारुदत्त ! परित्रायस्व परित्रायस्व।**[17] चारुदत्त तदा तत्कृतापराधान् विस्मृत्य कथयति – अहह ! अभयमभयं शरणागतस्य। शर्विलकादयः तं दुष्टं शकारं हन्तुमीहन्ते किन्तु चारुदत्तः निजस्वभावं न जहाति कथयति च -

**शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः।**
**शस्त्रेण न हन्तव्यः उपकारहतस्तु कर्तव्यः।।** इति [18]

चारुदत्तः सत्यभाषी वर्तते। स सर्वदा सत्यभाषितुमिच्छति। यदा वसन्तसेनायाः आभूषणचोरितेन चारुदत्तः खिन्नो भवति तदा विदूषकः परामर्शति यदल्पालीकवचनेन त्रातुं शक्नुमो वयम्। श्रुत्वा चारुदत्तः उत्तरति – **अहमिदानीमनृतमभिधास्ये।**

**भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यास-प्रतिक्रियाम्।**
**अनृतं नाभिधास्यामि चारित्रभ्रंशकारम्।।** [19]

वसन्तसेनायाः आभूषणविनिमये चारुदत्तस्य पत्नी धूता स्वकीयबहुमूल्यरत्नावलीं यदा ददाति , तदा प्रसन्नो भूत्वा चारुदत्तः कथयति –

**विभवानुगता भार्या , सुखदुःखसुहृद् भवान्।**
**सत्यं च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम्।।** [20]

## V. धर्माचरणपरायणो भाग्यवादी च –





अस्मिन् प्रकरणे प्रारम्भत एव वयं द्रष्टुं शक्नुमो यत् चारुदत्त धर्मकर्मनिरतो भाग्यवादी जनो वर्तते। स कदापि देवताभ्यो वलिप्रदानावसरे प्रमादं न विधत्ते। एतन्मे कर्त्तव्यमिति कृत्वा यथासमयं करोति। असौ सन्ध्यावन्दनं समाधिं च प्रतिदिनं करोति। यदा विदूषकः अस्य धर्माचारस्यालोचनां करोति तदा स कथयति – **'वयस्य ! मा मैवम् , गृहस्थस्य नित्योयं विधिः'**। अपि च –

**तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः।**
**तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः।।**[21]

धर्माचरणे तस्य चारुदत्तस्य दृढविश्वासो वर्तते। दशमाङ्के यदा मृत्युदण्डाय गच्छति तदापि तस्य विश्वासः स्थिर एव भवति – **'प्रभवति यदि धर्मो दूषितस्यापि मेद्य'**।[22] चारुदत्तः धर्मकर्मभिः सह भाग्ये अपि विश्वसिति। अत एव सम्भवत असौ उत्तरोत्तरं निर्धनतां प्राप्नोति। स धनादीनां प्राप्तिः हानिर्वा भाग्याधीनं मनुते – **भाग्यक्रमेण हि धनानि भवन्ति यान्ति।**[23] आर्यको यदा सुरक्षितः तत्सम्मुखे आयाति चारुदत्तस्य च अनुकम्पया आत्मानं सुरक्षितं मनुते तदा चारुदत्तः तस्य खण्डनं कृत्वा भणति – **स्वैर्भाग्यैः परिरक्षितोऽसि।**[24] इति शकुनापशकुनोपरि तस्य दृढो विश्वासः। न्यायालयं गच्छन् मार्गे जातान्यपशकुनानि दृष्ट्वा असौ बीभेति। भाविमृत्युञ्च चिन्तयति। भाग्यवादे विश्वासस्य पराकाष्ठायाः श्लोकोऽयं द्रष्टुं शक्यते –

**कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं**
**कांश्चित् पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान्।**
**अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-**
**न्नेष क्रीडति कूपयन्त्रघटिकान्यासप्रसक्तो विधिः।।**[25]

## VI. प्रतिष्ठाप्रेमी कलाप्रेमी च –

चारुदत्तः सदा स्वाभिमानं रक्षति। स कदापि तादृशं कार्यं न करोति येन तस्य वंशप्रतिष्ठायाः हानिः स्यात्। वसन्तसेनायाः आभूषणहृतप्रसङ्गे विदूषकद्वारा यदा असत्यभाषणाय प्रेर्यते तदा चारुदत्तः कथयति – **अनृतं नाभिधास्यामि चारित्रभ्रंशकारकम्** ,[26] इति। यदा तस्योपरि वसन्तसेनायाः

वधस्यापराधो सिद्धो भवति, तदा तस्मै मृत्युभयः नास्ति प्रत्युत केवलं चारित्रपतनस्य एव भीतिः, यथोच्यते तेन –

**न भीतो मरणादस्मि केवलं दूषितं यशः।**
**तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना।**
**शरेणेव विषाक्तेन दूषितेनापि दूषितः।।**
**प्राप्यैतद्‌-व्यसन-महार्णव-प्रपातं।**
**..........वक्तव्यं यदिह मया हता प्रियेति।।**[27]

स्वप्रतिष्ठायाः रक्षायै स असत्यमपि वक्ति। यदा वसन्तसेनाया आभूषणान्यपहृतानि भवन्ति। तदा स वसन्तसेनां कथयति – तान्याभूषणानि द्यूतक्रीडायामहं पराजितवानिति। आभूषणस्थाने स तस्याः पार्श्वे बहुमूल्यरत्नावलीं प्रेषयति। स जानाति यत् यदि सत्यं वक्ष्यामि तर्हि वसन्तसेना रत्नावलीमपि न ग्रहिष्यति समाजे जनाश्च तस्य दरिद्रतावशात् घटनायामस्यां न विश्वासं करिष्यन्ति। फलतः सर्वत्र तस्य अपयशः प्रसरिष्यति, ततः स विदूषकं भणति –

**कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति।**
**यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।**
**तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते।।**[28]

चारुदत्तः कलाप्रेमी गुणग्राही च वर्तते। स प्रत्येकं कलायाः सम्माननं करोति। सङ्गीतं प्रति तस्य विशेषाभिरुचिर्वर्तते। कामदेवायतनोद्याने अस्मिन्नेव प्रसङ्गे समुपस्थितं तमवलोक्य वसन्तसेना तस्मिन् मुह्यति आकृष्टा च भवति। तस्मै वीणावादनमतीव रोचते। रेभिलात् सङ्गीतं श्रुत्वापि स तस्यानन्दानुभवं विदधाति। शर्विलकद्वारा कलापूर्णं कृतसन्धिमवलोक्य स तं प्रशंसति – अहो, **दर्शनीयोऽयं सन्धिः। कथमस्मिन्नपि कर्मणि कुशलता ?** इति।[29]

VII. **आदर्शप्रेमी आदर्शमित्रञ्च –**

अस्मिन् प्रकरणे चारुदत्त आदर्शप्रेमिरूपेण चित्रितः। स एकां परमसुन्दरीं गणिकामिच्छति, किन्तु प्रेमव्यवहारप्रदर्शने गणिका एव प्रथमं प्रेमप्रस्तावं करोति। विदूषकमाध्यमेन ज्ञायते असौ यत् वसन्तसेना तस्मिन्





अनुरक्ता वर्तते – **एसा वसन्तसेना कामदेवाअदणुज्जाणादी पहुदिं भवन्तमणुरत्ता।** किन्तु स्वकीयनिर्धनतावशात् स गृहागतामपि वसन्तसेनामवलोक्य प्रसन्नो भूत्वा चिन्तयति यन्मे अनुरागः मय्येव सीमितः –

**यया मे जनितः कामः क्षीणे विभवविस्तरे।**
**क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति।।**[30]

अग्रे यदा विदूषकः वसन्तसेनायाः गृहमुपेत्य तस्यै रत्नावलीं प्रदाय तस्य व्यवहारेण रूष्टो भवति। प्रत्यागत्य चारुदत्तं वेश्यासम्बन्धविच्छेदाय भणति , तदा चारुदत्तः स्वकीयां परिस्थितिमवगत्य उत्तरति – **वयस्य ! अलमिदानीं परिवादमुक्त्वा। अवस्थयैवास्मि निवारितः।**

**वेगं करोति तुरगस्त्वरितं प्रयातुं....................पुनर्विशन्ति।।**
**यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जनः।**
**वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया।।** [31]

न्यायालये यदा तस्य मित्रतां वसन्तसेनया सह वर्तते इति पृष्टे स सलज्जो वक्ति – **भो अधिकृताः ! मम मित्रमिति , अथवा यौवनमत्रापराध्यति।**[32] स वसन्तसेनां विना स्वजीवनं व्यर्थं मन्यते। स मृत्युदण्डं स्वीकुर्वन् कथयति – **न च मे वसन्तसेनाविरहितस्य जीवनेन कृत्यम्** , इति। यद्यपि स गणिकां वसन्तसेनामभिलषति किन्तु अन्यत्र विषयेऽस्मिन्नसौ सावधानो वर्तते। स स्त्रीलम्पटः नास्ति। प्रथमाङ्के यदा भ्रमवशात् रदनिकाभ्रमेण वसन्तसेनायै स्वकीयदुकुलं प्रयच्छति तदा एषा तु काचिदन्या स्त्री वर्तते इति विज्ञाय पश्चात्तापं करोति – **न युक्तं परकलत्रदर्शनम्,**[33] इति ब्रूते। चारुदत्तः खलु एकः आदर्शमित्रमपि वर्तते। स सदा प्रत्येकं मित्राणां प्रत्येकं सुखदुःखेषु सहाय्यं कर्तुं प्रयतते। स मित्रतायाः निकषं जानाति स्म। स कस्यामपि विपन्नतायां मैत्रित्यागं निन्दति –

**सत्यं न मे विभवनाशकृतास्ति चिन्ता भाग्यक्रमेण हि धनानि भवन्ति यान्ति।**
**एतत्तु मां दहति नष्टधनाश्रयस्य यत्सौहृदादपि जनाः शिथलीभवन्ति।।**
**यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते।**
**तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः।।**[34]

चारुदत्त सन्मित्रं प्रशसति। विदूषकं स सन्मित्रं मन्यते , स कथयति – **अये ! सर्वकालमित्रं मैत्रैयः। .................. सुख-दुःख-सुहृद्भवान्।।**[35] इति।

VIII. **पत्नीप्रेमी पुत्रस्नेही च –**

यद्यपि स प्रारम्भत एव गणिकावसन्तसेनायाम् अनुरक्तः तथापि तस्य स्वधर्मपत्न्यां धूतायामपि अतीवनिष्ठा अत्यन्तप्रेम वर्तते। स सर्वदा तस्याः आदरं करोति, स्वकीयजीवने स तस्यै महत्त्वपूर्णं स्थानं प्रयच्छति स्म। यदा धूता स्वस्वामिनः प्रतिष्ठारक्षायै स्वकीयां बहुमूल्यरत्नावलीं ददाति तदा चारुदत्तः चिन्तितो भवति किन्तु निजभार्यायाः बुद्धिमत्तामवलोक्य गौरवमपि अनुभूय कथयति – **विभावानुगता भार्या ......,**इति। दशमाङ्के चारुदत्तस्य मृत्यदण्डस्य वार्तां श्रुत्वा दुःखी धूता आत्मघातं कर्तुं यतते। एतद्विज्ञाय चारुदत्तः सम्भ्रान्तो भवति। स वसन्तसेनामधिगत्यापि स्वकीयभार्यायाः वियोगं नेच्छति। स तस्याः एकाकिन्याः स्वर्गगमनमनौचित्यमिति भणति –

**न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते ! यदपि।**
**उचितं तथापि परलोकसुखं न पतिव्रते ! तव विहाय पतिम्।।**[36]

तत्रैव सहसा प्राप्य चारुदत्तः पुत्रं रोहसेनमालिङ्ग्य पत्नीं धूतां कथयति –

**हा प्रेयसी ! प्रेयसी विद्यमाने कोऽयं कठोरो व्यवसाय आसीत्।**
**अम्भोजिनीलोचनमुद्रणं किं भानावनस्तङ्गमिते करोति?**[37]

चारुदत्तं स्वपुत्रेऽपि तथैव स्निह्यति स्म। प्रथमाङ्के स तं सायंकालीनशीतलसमीरणात् त्रातुं तस्मै स्वदुकुलं प्रयच्छति। नवमाङ्के स्वकीयमृत्योः पश्चात् पितृवदेव तस्मिन् रोहसेने स्नेहं कर्तुं विदूषकाय कथयति –

**नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः।**
**मयि यो वै तव स्नेहो रोहसेने स युज्यताम्।।**[38]

दशमाङ्के मृत्युदण्डावसरे चाण्डालं पुत्रदर्शनार्थमसौ याचते – नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये। तत्रैव पुत्रमालिङ्ग्य स चारुदत्तः कथयति –

**इदं तत् स्नेहसर्वस्वं सममाढ्यदरिद्रयोः। अचन्दनमनौशीरं हृदयस्यानुलेपनम्।।**[39]

अवसाने चोपदिशति पुत्राय –





**आश्रमं वत्स गन्तव्यं गृहीत्वाद्यैव मातरम्।**
**मा त्वयि पितृदोषेण त्वमप्येवं गमिष्यसि।।**[40]

प्रकरणस्य प्रायः सर्वैः पात्रैः चारुदत्तस्य प्रशंसा विहिता। एकस्मिन्नेव पद्ये यदि चारुदत्तस्य सर्वाः विशेषताः वक्तव्याश्चेदिदं वक्तुं शक्यते –

**दीनानां कल्पवृक्षः स्वगुणफलनतः,सज्जनानां कुटुम्बी**
**आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः।**
**सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो**
**ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये।।**[41]

**. 4मृच्छकटिकप्रकरणस्य नायिका – वसन्तसेना**

मृच्छकटिकप्रकरणे वसन्तसेना अनुपमसुन्दरी विविधकलामर्मज्ञा नवयौवनसम्पन्ना अतिसमृद्धिमती पवित्रप्रेमिका स्त्रीसुलभविविधगुणसमलङ्कृता एका गणिकारूपेण चित्रिता साधारणनायिका वर्तते। नगरनारीणां कृते प्रायः वेश्याशब्दः प्रयुज्यते किन्त्वत्र वसन्तसेनायै गणिकाशब्दः प्रायुज्यत, तेनात्र ज्ञायते यत् सा सम्मानिता उच्चस्तरीया नगरलक्ष्मीरासीदिति। अष्टमाङ्के शकारो यदा वसन्तसेनां मारितवान् तदा दुःखितो विटः अब्रवीत् – 'अपापा पापकल्पेन नगरश्रीर्निपातिता' इति।[42] तस्याः व्यक्तित्वं प्रभावकम् आकर्षकं विद्यते। – 'अये ! कथं देवतोपस्थानयोग्या युवतिरियम्' इति।[43] गृहमागतायाः सौन्दर्यमवलोक्य चारुदत्तः प्रशंसति – 'छादिता शरदभ्रेण चन्द्रलेखेव भासते' इति। वसन्तसेना उज्जयिनीनगरस्य एका अतुलवैभवसम्पन्ना गणिका वर्तते। चतर्थाङ्के विदुषकः तस्याः भवनानि विद्यमानपदार्थान् चावलोक्य कुबेरभवनस्यांशमस्या भवनमित्युक्तवान्। गणिका सत्यपि सा लोभरहिता आसीत्, सा धनविषये कदापि न चिन्तयति स्म। द्वितीयाङ्के यदा मदनिका चारुदत्तेन सह तस्याः प्रेमविषये जानाति तदा तां वसन्तसेनां वक्ति – 'दरिद्रः खलु सः श्रूयते' इति। तदा वसन्तसेना सद्य एव उत्तरयति – 'अत एव काम्यते। दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति' इति। वसन्तसेना एका अतिप्रतिभासम्पन्ना गणिका वर्तते। सा विविधकलामर्मज्ञा अस्ति। कस्या अपि वार्तायाः तात्पर्यमवगन्तुं सा झटिति प्रभवति। प्रथमाङ्के यदा सा

शकारादिभिरावृता भवति तदा विटो रहस्यपूर्वकं किमपि सङ्केतयति तदा सा झटिति बुद्ध्वा तदनुसारमाचरति। चारुदत्तं निकषा आभूषणानि न्यासरूपेण स्थापयितुमकाट्यतर्कं प्रस्तौति – 'पुरुषेषु न्यासा निक्षिप्यन्ते न पुनर्गेहेष्विति'। चारुदत्तं प्रति तस्या अत्यन्तं प्रेम आसीत्। कामदेवायतनोद्याने यदा सा चारुदत्तमवलोकयति तदारभ्यैव सा तस्मिन्नासक्ता भवति। सा प्रेमविषये गुणान् अधिकं महत्त्वं मनुते – 'गुणः खल्वनुरागस्य कारणम्, न पुनर्बलात्कारः' इति। अत एव अतिविभवसम्पन्नराजश्यालकेन प्रेषितं धनराशिं विमुच्य निर्धने चारुदत्ते प्रेम प्रदर्शयति। वसन्तसेना स्वकीयसामाजिकमर्यादां प्रति सदैव सावधाना भवति। यदा सा चारुदत्तस्य गृहं सहसा प्रविशति तदा सा क्षमायाचनां कुरुते – 'एतेनानुचितंभूमिकारोहणेनापराद्धा आर्यं शीर्षेण प्रणम्य प्रसादयामि' इति। प्रातः चेटीद्वारा धूतायाः पार्श्वे रत्नावलीं प्रेषयती सा कथयति – 'चेटि! गृहाणैतां रत्नावलीं मम भगिन्या आर्याधूतायै गत्वा समर्पय। वक्तव्यं च – अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी तदा युष्माकमपि। तदेषा तवैव कण्ठाभरणं भवतु' इति। एतेन धूतां प्रति तस्या आदरभाव अवलोक्यते। रोहसेनं प्रत्यपि सा वात्सल्यभावं प्रकटयति। षष्ठाङ्के रदनिका यदा रुदन्तं रोहसेनं वसन्तसेनायाः पार्श्वे आनयति। तदा सा तद्विषये पृच्छति – 'रदनिके स्वागतं ते, कस्य पुनरयं दारकः अनलङ्कृतशरीरोपि चन्द्रमुख अनन्दयति माम्' इति। वसन्तसेना गणिका सत्यपि सामान्यतया प्रतिदिनं स्नानादिकं विधाय देवार्चनां करोति स्म। द्वितीयाङ्के यदा मातुराज्ञा भवति यत् स्नानादिकं विधाय देवार्चनां करोत्विति तदा सा उद्विग्नचित्ता कथयति – 'चेटि ! विज्ञापय मातरम् अद्य न स्नास्यामि। तद् ब्राह्मण एव पूजां निर्वर्तयतु' इति।

सर्वगुणसम्पन्नायां तस्यां वसन्तसेनायां केवलमेक एव दोष आसीत् यत् सा गणिका आसीदिति। शकारस्य प्रणयमस्वीकुर्वती यदा सा तेन मारिता तदा विटो ब्रवीति –

अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि !।
चारित्र्यगुणसम्पन्ने जायेथा विमले कुले।।[44]

अस्मिन्नेव प्रसङ्गे विटस्य एतानि वचांस्यपि ध्यातव्यानि सन्ति –





दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति–
हा हालङ्कृतभूषणे सुवचने क्रीडारसोद्भासिनि।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः।।[45]

एवमत्र मृच्छकटिकप्रकरणे नायकस्य नायिकायाश्च वैशिष्ट्यं समासेनात्र प्रदर्शितम्।

### सन्दर्भाः

1. मृच्छकटिकम् 1 –/3
2. मृच्छकटिकम् – 1/4 ,5
3. साहित्यदर्पणः 3 – 6
4. साहित्यदर्पणः 241,43 – 6
5. साहित्यदर्पणः
6. साहित्यदर्पणः
7. मृच्छकटिकम् 162 –
8. मृच्छकटिकम् 9 –/16
9. मृच्छकटिकम् – पृ 53 .3
10. मृच्छकटिकम् – पृ116 .
11. मृच्छकटिकम् 3 –/2
12. मृच्छकटिकम् – पृ191 .
13. मृच्छकटिकम् – पृ314 .
14. मृच्छकटिकम् – पृ178 .
15. मृच्छकटिकम् – पृ318 .
16. मृच्छकटिकम् 7 –/6
17. मृच्छकटिकम् 636 –
18. मृच्छकटिकम् 10 –/55
19. मृच्छकटिकम् 3 –/26
20. मृच्छकटिकम् 3 –/28

21. मृच्छकटिकम् 1 –/16
22. मृच्छकटिकम् 10 –/34
23. मृच्छकटिकम् 1 –/13
24. मृच्छकटिकम् 7 –/7
25. मृच्छकटिकम् 10 –/60
26. मृच्छकटिकम् 3 –/26
27. मृच्छकटिकम् 10 –/27,28,33
28. मृच्छकटिकम् 3 –/24,29
29. मृच्छकटिकम् – पृ217 .
30. मृच्छकटिकम् 1 –/55
31. मृच्छकटिकम् 5 –/9
32. मृच्छकटिकम् – पृ535 .
33. मृच्छकटिकम् – पृ118 .
34. मृच्छकटिकम् 1 –/16,53
35. मृच्छकटिकम् 3 –/28
36. मृच्छकटिकम् 10 –/56
37. मृच्छकटिकम् 10 –/58
38. मृच्छकटिकम् 9 –/62
39. मृच्छकटिकम् 10 –/23
40. मृच्छकटिकम् 10 –/32
41. मृच्छकटिकम् 1 –/48
42. मृच्छकटिकम् 8 –/39
43. मृच्छकटिकम् – पृ120 .
44. मृच्छकटिकम् 8 –/43
45. मृच्छकटिकम् 8 –/38

****************





# विदग्धमाधवे नायको नायिका च

-डा.स्वर्गकुमारमिश्र:
संविदाध्यापक:, साहित्यविभाग:
रा. सं. सं. क. जे. सोमैयासंस्कृतविद्यापीठम्

शृंगारमाङ्गलिकयो: श्रीराधामाधवयोर्मिलनात्मकं मधुररससम्वलितं विदग्ध-माधवनाटकं श्रीरूपगोस्वामिविरचितं सप्ताङ्केषु निवद्धमनवद्यं किमपि नव्यरूपकम्। नाटकस्यास्य कलापक्ष: यथा मनोज्ञ: भावपक्षोऽपि तथा चमत्कारकर:। अस्मिन् नाटके राधामाधवयो: परमरहस्यमयं मिलनं मधुरेण सम्पादितं वर्त्तते। मधुमधुरोऽयं शृंगारोज्वलो मधुररस:। कृष्णरतिरत्र स्थायी। स च कैश्चिद्भावत्वेन कुत्रचिद्विवक्षितोऽपि रसत्वमर्यादयाऽत्र नाटके भासते। विषयालम्वन: धीरललित: चतुष्षष्टिगुणोपपन्न: नायकानां शिरोरत्नं श्रीकृष्ण:। स: च सर्वसल्लक्षणान्वित:। नाटकेऽस्मिन् राधायामयमनुकूलोऽपि चन्द्रावलीं प्रति दाक्षिण्यमस्य शोभते। स च पुन: क्वचित् धूर्त: कदाचिच्च शठरूपेणावतीर्ण: दृश्यते। उक्तञ्च-

"शाठ्यधार्ष्टे परं नाट्यप्रोक्ते उपपतिरुभे।
कृष्णे तु सर्वं नायुक्तं तत्तद्भावस्य संम्भवात्॥" (१) इति

पुनश्च-

"राधायामेव कृष्णस्य सुप्रसिद्धानुकूलता।
तदालोके कदाप्यस्य नान्यासङ्ग: स्मृतिं व्रजेत्॥" (२) इति

अयं नवतारुण्ययुक्त: सुरम्याङ्ग: विदग्धश्चेत्यादिभिर्गुणै: विशिष्ट:। यदुक्तम्-

"अयं सुरम्यो मधुर: सर्वसल्लक्षणान्वित:।
बलीयान्नवतारुण्यो वावदूक: प्रियम्वद:॥५
सुधी: सप्रतिभो धीरो विदग्धश्चतुरो सुखी।
कृतज्ञो दक्षिण: प्रेमवश्यो गम्भीरताम्बुधि:॥६
वरीयान्कीर्त्तिमान्नारीमोहनो नित्यनूतन:।

अतुल्यकेलिसौन्दर्यप्रेष्ठवंशीस्वनाङ्कितः॥७

इत्यादयोऽस्य श्रृङ्गारे गुणाः कृष्णस्य कीर्त्तिताः॥"(३) इति

विदग्धमाधवनाटके प्रथमे अङ्के कृष्णं पश्यन्त्याः पौर्णमास्याः ...
नायकोत्तमं तं वर्णयितुमलम्। तद्यथा-

"अयं नयनदण्डितप्रवरपुण्डरीकप्रभः
प्रभाति नवजागुडव्रजविडम्बिपीताम्बरः।
अरण्यजपरिष्क्रियादमितदिव्यवेषादरो
हरिन्मणिमनोहरद्युतिभिरुज्ज्वलाङ्गो हरिः॥" (४)

सः महानायकः। तस्य नाममात्रं सर्वानाकर्षति। तन्नामश्रवणे ...
विलक्षणा काचिदनुभूतिर्जायते इन्द्रियाणि च आशु वशीभूतानि भवन्तीति नाटके ...
पौर्णमासीमुखेन यत्प्रदर्शितं तद्यथा-

"तुण्डे ताण्डविनी रतिं वितनुते तुण्डावलीलब्धये
कर्णक्रोडकडम्बिनी घटयते कर्णार्बुदेभ्यः स्पृहाम्।
चेतःप्राङ्गणसङ्गिनी विजयते सर्वेन्द्रियाणां कृतिं
नो जाने जनिता कियद्भिरमृतैः कृष्णेति वर्णद्वयी॥" (५) इति

अयं वंशीवादकः। वंशीवादकत्वेन लालित्यमेतस्य सहचरभावेन नाटके
प्रदर्शितमस्ति। वंशीवादनेन स्वात्मानमपि विनोदयति एषः। तद्वंशीध्वनिः
कस्यापि जडस्य चेतनस्य वा वशीकरणनिमित्तं पर्याप्तरूपेण समर्थः। का कथा
अन्येषाम्, वृन्दारका हरब्रह्मादयोऽपि वंशीध्वनिमाकर्ण्य ...
मेघपदवीमवलम्बन्ते। वंशीध्वनेः परिणामरूपेण परस्परविपर्यस्तस्वभावानामपि
भावानां धर्मविपर्ययं प्रदर्शयन् बलरामो वदति-

"जातस्तम्भतया पयांसि सरितां काठिन्यमापेदिरे
ग्रावाणो द्रवभावसंवलनतः साक्षादमी मार्दवम्।
स्थैर्यं वेपथुना जहुर्मुहुरगाज्जाड्याद्गतिं जङ्गमां
वंशी चुम्बति हन्त यामुनतटीक्रीडाकुटुम्बे हरौ॥" (६) इति





राधायामस्य सहजः स्नेहः नाटके दरीदृश्यते। पौर्णमास्याः राधाभिधानमात्रं श्रुत्वैव सः रोमाञ्चति व्रीडाविलक्षश्च भवति। तदन्वेषणतत्परश्च दृश्यते पृच्छति च सुदामानं प्रियवयस्यं–

"किं दृष्टापूर्वा ते जगदपूर्वा राधा।" (७) इति

कल्पनया एव स राधां तत्सौन्दर्यवृन्दञ्च पश्यति। उक्तञ्च-

"यत्र प्रकृत्या रतिरुत्तमानां तत्रानुमेयः परमोनुभावः।
नैसर्गिकी कृष्णमृगानुवृत्तिर्देशस्य विज्ञापयति प्रशस्तिम्॥" (८)
इति

राधाकृष्टोऽपि विदग्धोयं मधुमङ्गलसमक्षं सर्वं गोपायते। ललितानीतस्य राधाप्रणयपत्त्रस्य मधुमङ्गलेन वाचनं श्रुत्वा अन्तर्मनसि उल्लसितः सन्नपि "केनाप्यपरेण नागरेण तस्याः स्वान्तमुच्चालितमि"ति तर्कयित्वा ताः सर्वाः व्रजवल्लभीः दूषयति भीषयति च। उक्तञ्च तेन-

"स्निग्धैरेभिः सखिभिरखिलैर्धेनुवृन्दानुसारी
नारीवार्त्ताविमुखहृदयः काननान्ते चरामि।
मां स्वैरिण्यस्तदपि यदिमा दूषयन्ति प्रकामं
तद्विज्ञप्तिं द्रुतमिह जरद्गोपगोष्ठ्यां करोमि॥" (९) इति

अपि च –

"सङ्गी मे मधुमङ्गलो न सहते धर्माध्वनो विच्युतिं
श्रीदामा परिमार्गयन्मम न हि छिद्राणि निद्रायते।
कंसः शास्ति खलः क्षितिं कथमतो मुग्धे विधेयं मया
निःशङ्कं कुलसुन्दरीपरिभवज्वालामहासाहसम्॥" (१०) इति

जानन्निव राधाकृतां गुञ्जामालिकां धारयन् स्वरङ्गणमालिकां विशाखायै रूपसादृश्यात् समर्पयति। अनन्तरं प्रथमदर्शनसमये एव विशाखया मालिका अपहृता इति कथयित्वा राधाहृदयमुद्वेलयति। पुनः यदा राधा सविधे कृष्णं दृष्ट्वा जटिला तं धूर्त्तमिति चिन्तयति सहसा एव वैदग्ध्येन तां निवारयति। उक्तञ्च-

"न खलु स्वप्नेऽपि मया कामिनीस्पर्शः स्मर्यते।" ****मृषाशङ्किनि वृद्धे, मा प्रलापं कृथाः। यावदेतां ते वधूमाकर्णयं तावन्मान्यां भावयामि।" (११) इति

जटिलया सह गतायां राधिकायां सोऽनुतप्तो भवति प्रलपति च। तदङ्गसङ्गं विना नितरां खिन्नश्च दृश्यते। तदवस्थामेतां दूरतो निर्वर्ण्य पौर्णमासी वदति-

**"अक्ष्णोर्द्वन्द्वं प्रसरति दरोद्घूर्णतारं मुरारेः**
**श्वासाः क्लृप्तां किल विचकिलैर्मालिकां म्लापयन्ति।**
**केयं धन्या वससि रमणी गोकुले क्षिप्रमेतां**
**नीतस्तीव्रामयमपि यया कामपि ध्याननिष्ठाम्॥"**[१२] इति

पौर्णमास्या म्लानकारणे पृष्टे विदग्धः एषः सङ्गमकारिणीं तामपि प्रवञ्चयति। उक्तञ्च-**"किन्तु निश्चितं ते व्याहरामि। न तासु मच्चित्तरागस्त्वद्गोपीषु।"**इति[१३]

कृष्णस्य धार्ष्ट्यं सर्वाः गोपी रञ्जयतीति दृश्यते। ललिताविशाखादिभिस्सह नर्मकर्मणि वैदग्ध्यं प्रकाशयतः धृष्टस्यास्य चातुर्यं वर्णयन्ती ललिता वदति-

**"केनापि धूर्त्तपतिना खलु शिक्षितासि**
**मन्त्रं वशीकरणकारणमौषधं वा।**
**पुण्योज्ज्वलान्यखिलगोपविलासिनीनां**
**येन त्वया गृहसुखानि विलुण्ठितानि॥"**इति[१४]

अयमपि धृष्टवचनेन राधासङ्गविघ्नकारिणीं जटिलां मुखरां वा उद्वेजयतीति लक्ष्यते। यदा ताः जटिलादयः कृष्णं राधां परितः पश्यन्ति तदा आशङ्कमाणाः लक्ष्यन्ते। तदा ताः प्रति कृष्णस्य धृष्टवचनमतीव नर्ममर्मज्ञतायाः निदर्शनरूपेणोपन्यस्तम्। तद्यथा-

**"मुखरां प्रति-हन्त वृद्धे गह्वरविषाणकठोरे।**
**विश्रब्धमास्यताम्। एषोऽहं व्रजामि।"**इति[१५]

पौर्णमास्या राधामिलनाय प्रेरितः सः राधिकादूतीं माकन्दवेद्यामप्राप्य समुत्कण्ठते। दूत्यारनागमनस्य कारणं व्यग्रेण चिन्तयति। प्रलपति चेत्थम्-

**"ध्यात्वा धर्मं धृतिमुदयिनीं किं बबन्धाद्य राधा**
**तीव्राक्षेपैः किमुत गुरुभिर्लम्भिता वा निवृत्तिम्।**





**किं वा कष्टामभजत दशां तामविस्पन्दमन्दा-**
**मिन्दौ विन्दत्युदयमपि यन्नाजगामाद्य दूती॥"**इति[१६]

दक्षिणः एषः चन्द्रावलीं दृष्ट्वा तां प्रसादयति स्वानुरक्तिं च प्रकाशयति। उक्तञ्च-

**"चन्द्रस्तव मुखबिम्बं चन्द्रा नखराणि कुण्डले चन्द्रौ।**
**नवचन्द्रस्तु ललाटं सत्यं चन्द्रावली त्वमसि॥"**[१७] इति

तत्र राधानामोच्चारणेन कुपितां तां प्रसादयितुं सहसा एव न राधा धारा तु उक्तमिति कथयित्वा तां छलयति। तदा राधा प्रतिश्रुत्यनुसारं केसरकुञ्जं विमण्ड्य तं प्रतिपालयति तदा

चन्द्रावल्या सह प्राप्तसङ्गोऽयं तस्याः निवृत्त्य नागकेसरहस्तः **"मया नागकेसरकुञ्जे त्वां प्रतीक्षितवान्** "इत्युक्त्वा तां छलयतीति अहो मुग्धावञ्चनवैदग्ध्यं कृष्णस्य।

नर्मपूर्णैर्वचोभिरेषः सर्वाः गोपी राधाञ्च छलयतीति दृश्यते। यदा मधुमङ्गलद्वारा राधासमक्षं चन्द्रावल्याः कुञ्जसङ्गतिप्रसङ्गः उद्घाट्यमानः अवलोक्यते तदा वाक्छलेन प्रसङ्गं राधागतमेव कृत्वा स्ववैदग्ध्यं प्रमाणीकुरुते। तत्र मधुमङ्गलवचनं यथा-

**"क्लान्तेन ते वदनचन्द्रमनाकलय्य**
**कल्याणि गोकुलपुरन्दरनन्दनेन।**

**चन्द्रावली-"** इति मधुमङ्गलस्यार्धोक्तिं पूरयन् आह-

**चन्द्रावली न नयनान्ततया किलास्य**
**सा दृश्यतः कथमपि क्षपिता क्षपेयम्॥"** [१८]इति

राधामानभञ्जनाय नर्मप्रयोगपटुरेष **"तवाधीनो नाहमेव केवलोऽस्मि किन्तु ते मम दशावताराश्च"** इत्युक्तिं समर्थयितुं आह-

**"चञ्चन्मीनविलोकनासि कमठोत्कृष्टस्तनी संगता**
**क्रोडेन स्फुरता तवायमधरः प्रह्लादसंवर्धनः।**
**मध्योऽसौ बलिबन्धनो मुखरुचा रामास्त्वया निर्जिता**
**लेभे श्रीघनताद्य मानिनि मनस्यङ्गीकृता कल्किता॥"** [१९] इति

अपि च-

**"निष्ठुरा भव मृद्वी वा प्राणास्त्वमसि राधिके।**
**अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिः॥"** [२०] इति

कदाचित् स्त्रीवेशं धारयित्वा राधामानभञ्जनं च कुरुते। कदा वा पुष्पहारेण मुरलीं संगोप्य राधां प्रापयति। राधामन्विष्य तत्र मुखरायां प्रविष्टायां सती **"अनया ते नप्त्र्या मे वंशिका चोरिता इति"** मिथ्याप्रपञ्चं रचयित्वा स्वचापलं गोपायते। जटिलामुख्गरादिभिः रोधितावपि येन केन प्रकारेण राधया सह मिलनाय कृष्णः सततं यतते। यदा राधाकृष्णयोः प्रणयभावं विज्ञाप्य अभिमन्युः राधिकां स्वगृहे निरुणद्धि तदा विरहेण अतीवाकुलोऽयं सर्वत्र राधामयं पश्यति।उक्तञ्च-

**"राधा पुरः स्फुरति पश्चिमतश्च राधा**
**राधाधिसव्यमिह दक्षिणतश्च राधा।**
**राधा खलु क्षितितले गगने च राधा**
**राधामयी मम बभूव कुतस्त्रिलोकी।"** [२१]इति

षष्ठे अङ्के मिलनमनयोः संघटितमपि अभिमन्योर्मनुना राधा कदाचिदपि मथुरां नेष्यते इति हेतोः कथमपि अभिमन्योः मनसि विश्वासं समुत्पादयितुं गौरीवेशं धारयति। गौरी भूत्वा मन्दिरे गौरीं पूजयतोऽभिमन्योः पुरतः यथा स गोपे एव राधां स्थापयिष्यति तथा आशीर्वदति। उक्तञ्च-

**"वशीकृतात्मास्मि वशीन्द्रदुष्करैस्तवाद्य राधे नवभक्तिदामभिः।**
**तदिष्टसिद्धिं कृतगोकुलस्थितिः सदा मदाराधनतस्त्वमाप्स्यसि॥"** इति

एवमेव विदग्धललितनायकरूपेण श्रीकृष्णः नाटकस्यास्य मधुररसस्य च नेता।

आश्रयालम्बनरूपा राधा परकीयापि कृष्णस्य नित्यप्रिया मुग्धानायिका। **"प्रेयसीषु हरेरासु प्रवरा वार्षभानवी"**। सा कृष्णस्य ह्लादिनी शक्तिः। अस्याः कृष्णं प्रति स्वारसिकी समर्था च रतिः। यदुक्तम्-

**"न जातु व्रजदेवीनां पतिभिः सह सङ्गमः॥**
**गोपैर्व्यूढा अपि हरेः सदा सम्भोगलालसाः।**





**परोढा वल्लभास्तस्य व्रजनार्योऽप्रसूतिका॥**
**राधाचन्द्रावलीमुख्याः प्रोक्ता नित्यप्रिया व्रजे।**
**कृष्णवन्नित्यसौन्दर्यवैदग्ध्यादिगुणाश्रयाः॥"** [२२] इति

किञ्च-

**"तयोरप्युभयोर्मध्ये राधिका सर्वथाधिका।**
**महाभावस्वरूपेयं गुणैरतिवरीयसी॥**
**सुष्ठु कान्तस्वरूपेयं सर्वदा वार्षभानवी।**
**धृतषोडशशृङ्गारा द्वादशाभरणाश्रिता॥**
****मधुरेयं नववयाश्चलापाङ्गोज्ज्वलस्मिता।**
**चारुसौभाग्यरेखाढ्या गन्धोन्मादितमाधवा।**
**सङ्गीतप्रसराभिज्ञा रम्यवाङ्नर्मपण्डिता॥**
**विनीता करुणापूर्णा विदग्धा पाटवान्विता।**
**लज्जाशीला सुमर्यादा धैर्यगाम्भीर्यशालिनी॥**
**सुविलासा महाभावपरमोत्कर्षतर्षिणी॥**
**गोकुले प्रेमवसतिर्जगच्छ्रेणीलसद्यशाः॥**
**गुर्वर्पितगुरुस्नेहासखीप्रणयितावशा।**
**कृष्णप्रियावलीमुख्या सन्ततासवकेशवा॥****
**गुणा वृन्दावनेश्वर्या इह प्रोक्ताश्चतुर्विधा।**
**माधुर्यं चारुता नव्यं वयः कैशोरमध्यमम्॥**
**सौभाग्यरेखाः पादादिस्थिताश्चन्द्रकलादयः।**
**साधुमार्गादचलनं मर्यादेत्युदितं बुधैः॥**
**लज्जाभिजात्यशीलाद्यैर्धैर्यदुःखसहिष्णुता।**
**व्यक्तत्वाल्लक्षितत्वाच्च नान्येषां लक्षणं कृतम्॥"** [२३]इति

एवमेव द्वात्रिंशल्लक्षणयुता सौन्दर्यस्य नवतरङ्गिणीयं किशोरी श्रीराधा वृषभानुनन्दिनी मुखरानप्त्री कृष्णे सहजानुरागिणी नित्यप्रियापि[२४](पौ- नित्यप्रेयस्य एव खलु ताः कृष्णस्य पृ१२/१म) राधामाधवमिलनविधायित्र्या

पौर्णमास्या कंसभयात् व्रजमानीता तद्वञ्चनार्थमेव जटिलापुत्रेणाभिमन्युना चोद्वाहिता। तत्सौन्दर्यमेव कंसभयं प्रति कारणमिति पौर्णमासी सूचयति।

उक्तञ्च-

**"राधासौन्दर्यवृन्दमेव विज्ञाने निदानम्। यतः-**
**लोकोत्तरा गुणश्रीः प्रथयतिपरितो निगूढमपिवस्तु।**
**पिहितामपि प्रयत्नाद्व्यनक्ति कस्तुरिकां गन्धः॥"**(२४) इति

सा मधुरा पाटवान्विता विनयार्जवादियुक्ता। तत्सौन्दर्यवृन्देषु दूरतो मधुरतां दृष्ट्वा तत्परिप्रकाशयन्ती पौर्णमासी वदति-

**"बलादक्ष्णोर्लक्ष्मीः कवलयति नव्यं कुवलयं**
**मुखोल्लासः फुल्लं कमलवनमुल्लङ्घयति च।**
**दशां कष्टामष्टापदमपि नयत्याङ्गिकरुचि-**
**र्विचित्रं राधायाः किमपि किल रूपं विलसति॥"** इति(२५)

पाटवान्विता यथा-

**"छिन्नः प्रियो मणिसरः सखि मौक्तिकानि**
**वृत्तान्यहं विचिनुयामिति कैतवेन।**
**मुग्धं विवृत्य मयि हन्त दृगन्तभङ्गीं**
**राधा गुरोरपि पुरः प्रणयाद्व्यतानीत्॥"** (२६)इति

विनीता यथा-

**"भूयो भूयः कलिविलसितैः सापराधापि राधा**
**श्लाघ्येनाहं यदघरिपुणा बाढमङ्गीकृतास्मि।**
**तत्र क्षामोदरि किमपरं कारणं वः सखीनां**
**दत्तामोदां प्रगुणकरुणामञ्जरीमन्तरेण॥"** (२७)इति

सहजस्नेहवशात् कृष्णनामश्रवणमात्रेण सा रोमाञ्चिता कमपि भावं विन्दतीति नान्दीमुखी सूचयति। ललितामुखात् कृष्णनाम श्रुत्वा इयं मोहिता भवति वदति च-

**"अहो मधुरत्वं द्वयोरक्षरयोः।*** हन्त यस्य नामापि रामाचित्तमित्थं मोहयति स खलु कीदृशो वा नामीति।**(२७) इति विदग्धमाधवम् पृ३२/१म





किञ्च नेपथ्ये तद्वंशीध्वनिं श्रुत्वा अधीरा भवति। वंशीध्वनेर्मादकतामसहमाना सा विवशा दृश्यते। वंशीवादकञ्च द्रष्टुमिच्छति। उक्तञ्च-

" ***आश्चर्यम्, अस्य मोहनत्वं शब्दस्य।"
**नादः कदम्बविटपान्तरतो विसर्पन्को नाम कर्णपदवीमविशन्न जाने।**
**हा हा कुलीनगृहिणीगणगर्हणीया येनाद्य कामपि दशां सखि लम्भितास्मि॥"** इति(२८)

**"अजडः कम्पसम्पादी शस्त्रादन्यो निकृन्तनः।**
**तापनोऽनुष्णताधारः कोऽयं वा मुरलीरवः॥"**(२९) इति

वारं वारं वंशीध्वनेः विक्रमेण राधा गुरुवेदनया पर्याकुला भवति। राधायाः तदवस्थां प्रकाशयन्ती ललिताया इयमुक्तिः यथा-

**"क्षौणीं पङ्किलयन्ति पङ्कजरुचोरक्ष्णोः पयोबिन्दवः**
**श्वासास्ताण्डवयन्ति पाण्डुवदने दूरादुरोजांशुकम्।**
**मूर्त्तिं दन्तुरयन्ति संततममी रोमाञ्चपुञ्जाश्च ते**
**मन्ये माधवमाधुरी श्रवणयोरभ्याशमभ्याययौ॥"** (३०)इति

ललिता कृष्णमोहनवंशीनादविमुग्धां राधां कृष्णचित्रपटं दर्शयति। तच्चित्रसंदर्शनेन राधा कृष्णेन सह मीलितुमधीरा दृश्यते। शरीरे संतापं वर्धते। वातुला भूत्वा किमपि प्रलपति। तच्छरीरावस्थां वर्णयन्ती विशाखा सन्तापकारणं ज्ञातुचेष्टते। उक्तञ्च-

**"चिन्तासन्ततिरद्य कृन्तति सखि स्वान्तस्य किं ते धृतिं**
**किं वा सिञ्चसि ताम्रमम्बरमतिस्वेदाम्भसां डम्बरम्।**
**कम्पश्चम्पकगौरि लुम्पति वपुः स्थैर्यं कथं वा बला-**
**त्तथ्यं ब्रूहि न मङ्गला परिजने संगोपनाङ्गीकृतिः॥"**(३१) इति

सख्या वारं वारं पृष्टापि सा लज्जाशीला सन्तापकारणं वक्तुमसमर्था **"अयि निष्ठुरे त्वमेवं पृच्छन्त्यपि न लज्जसे"** इति **"गुर्वी लज्जा मां निवारयतीति"**(३२) इति च वदति। किन्तु तदवस्थदुःखितायाः सख्याः अनुरोधं स्वीकृत्य तस्या अनुरागः पुरुषत्रयेषु प्रवर्धते इति प्रकाशयति। तयोक्तं यथा-

**"एकस्य श्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरम्**
**सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः।**
**एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणात्**
**कष्टं धिक्पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी॥"** (३३)इति

तस्येमां दशां प्रेक्ष्य नान्दीमुखीपौर्णमासीप्रभृतयः कृष्णेन सह मीलनं यथा भवेत्तदर्थं उपायान् चिन्तयन्ति। तन्निमित्तं प्रणयलेखश्च क्रियते। किन्तु असम्भाविते मीलने राधा हतोत्साहिता भवति। कृष्णवैदग्ध्येन उपेक्षिता सा स्वजीवितं त्यक्तुमिच्छति। उक्तञ्च-

**"यस्योत्सङ्गसुखाशया शिथिलिता गुर्वी गुरुभ्यस्त्रपा**
**प्राणेभ्योऽपि सुहृत्तमाः सखि तथा यूयं परिक्लेशिताः।**
**धर्मः सोऽपि महान् मया न गणितः साध्वीभिरध्यासितः**
**धिग्धैर्यं तदुपेक्षितापि यदहं जीवामि पापीयसी॥"**
**"मां परिहरति मुकुन्दस्तदपि दुराशा विरोधिनी दहति।**
**मम सखि गभीरनीरा शरणं भगिनी कृतान्तस्य॥"** (३४)इति

सूर्यपूजनार्थं गता सा कृष्णं दृष्ट्वा यदा मीलनोत्कण्ठिता भवति तदा विघ्नस्वरूपया जटिलया विघ्निता अतः खिन्ना दृश्यते। उक्तञ्च-

**"पीतं न वागमृतमत्र हरेरशङ्कं**
**न्यस्तं मयास्य वदने न दृगञ्चलञ्च।**
**रम्ये चिरादवसरे सखि लब्धमात्रे**
**हा दुर्विधिर्विरुरुधे जरतीच्छलेन॥"** (३५) इति

माधवस्त्वया मीलितुं नेच्छतीति तद्भावं विज्ञातुं पौर्णमासी यदा सकैतवं कथयति तदा सा विवशा मोहं गच्छति कृष्णदर्शनेन च स्वां भाग्यवतीं मनुते। यदा ललिता कृष्णसमक्षं तां नयति तदा मुग्धेयं भीता भवति ललितां चोपालम्भते। उक्तञ्च-**"अयि धृष्टे ललिते,अत्रानीय मां विडम्बयसि। तद्गत्वा वृद्धानां गोपीनां विज्ञापयिष्ये।"** (३६)इति

यदा च कृष्णस्तस्याः करस्पर्शं करोति तदा **"सुन्दर, अयुक्तं तवेदमिति"** **"ईदृशं साहसं न खलु मादृश्या युक्तमिति"** च कथयित्वा





तत्पाणिमाच्छिद्य शाखिनां तिरोदधाति। यदा कृष्णः वस्त्राञ्चलं स्पृशति तदा **"इतो गत्वार्यां विज्ञापयिष्यामीति"** पुनः यदा कृष्णस्तमालिङ्गति तदा **"मुञ्च मुञ्च सख्यौ मामाहूयत"** इति(३७)चोक्त्वा स्वात्मानं मोचयित्वा मुग्धानायिकायाः चरितं प्रख्यापयति। तथापि कृष्णे तस्या अचला प्रीतिः। केसरकुञ्जे दत्तसंकेतस्य कृष्णस्याभिसारिकारूपेण चतुर्थेऽङ्के अतिशीघ्रतावशात् विकृतवेशरचनया तामवतीर्णां तामस्यभिसारिकां वर्णयन्ती ललितापद्यं तस्याः मिलनोत्कण्ठां सुन्दरतया प्रतिपाद्यते। तद्यथा-

**"धम्मिल्लोपरि नीलरत्नरचितो हारस्त्वया रोपितो**
**विन्यस्तः कुचकुम्भयोः कुवलयश्रेणीकृतो गर्भगः।**
**अङ्गे कल्पितमञ्जनं विनिहिता कस्तूरिका नेत्रयोः**
**कंसारेरभिसारसंभ्रमभरान्मन्ये जगद्विस्मृतम्॥"** (३८) इति

अपि च-

**"तिमिरमसिभिः संवीताङ्ग्यः कदम्बवनान्तरे**
**सखि बकरिपुं पुण्यात्मानः सरन्त्यभिसारिकाः।**
**तव तु परितः विद्युद्वर्णास्तनुद्युतिसूचयो**
**हरि हरि घनध्वान्तान्येताः स्ववैरिणि भिन्दते॥"** (३९) इति

बकुलकुञ्जं प्राप्य मीलनेच्छया तया कुञ्जः विमण्डितोऽपि अनागते कृष्णे सा क्षुब्धा भवति। वासकसज्जायाः राधिकाया विरहं तज्जन्यां च गुरुवेदनां विवृण्वन् कृष्णः कुञ्जशय्यां निरूपयति। तद्यथा-

**"ताम्बूलं घनसारसंस्कृतमदः क्षिप्तं पुरो राधया**
**हारी हन्त हरिन्मणिस्तवकितो हारोऽयमुत्सारितः।**
**पौष्पी चेयमुदारसौरभमयी चूडा नखैः खण्डिता**
**तस्याः शंसति विप्रलम्भजनितं कुञ्जोऽयमन्तः क्लमम्॥"** (४०) इति

विचित्रेयं नायिका कदाचिन्नाटके मानविमुखी सा मुग्धा। कुत्रापि खण्डिता कदाचिच्च माने कर्कशा मध्यायते।

**खण्डिता** यथा-मया तव प्रतीक्षायां रात्रिरुजागरक्षपितेति श्रुत्वा चन्द्रावलीकेलिचिह्नानि उद्घाट्य राधावचनम्। तद्यथा-

"मुक्तान्तर्निमिषं मदीयपदवीमालोकमानस्य मे
जाने केसररेणुभिर्निपतितैः शोणीकृते लोचने।
शीतैः काननवायुभिर्विरचितो बिम्बाधरे च व्रणः
संकोचं त्यज देव दैवहतया न त्वं मया दूष्यसे॥" (४१) इति

माने कर्कशा यथा वृन्दावचनेषु-

"मुधा मानोन्नाहाद्धपयति किमङ्गानि कठिने
रुषं धत्से किं वा प्रियपरिजनाभ्यर्थनविधौ।
प्रकामं ते कुञ्जालयगृहपतिस्ताम्यति पुरः
कृपालक्ष्मीवन्तं चटुलय दृगन्तं क्षणमिह॥" (४२) इति

एवमेव नाटके साऽपूर्वानायिकारूपेण स्थिता मधुररसं पोषयन्ती दृश्यते।

************

## पादटीका

१. २१/उज्वलनीलमणिः/नायकलक्षणम्
२. २३/उज्वलनीलमणिः/नायकलक्षणम्
३. ८/उज्वलनीलमणिः/नायकलक्षणम्
४. विदग्धमाधवम्१७/प्रथमाङ्कः
५. विदग्धमाधवम्१५/प्रथमाङ्कः
६. विदग्धमाधवम्१५/प्रथमाङ्कः
७. विदग्धमाधवम् पृ.२५/प्रथमाङ्कः
८. विदग्धमाधवम्३२/द्वितीयाङ्कः
९. विदग्धमाधवम्३४/द्वितीयाङ्कः
१०. विदग्धमाधवम्३२/द्वितीयाङ्कः
११. विदग्धमाधवम्/ द्वितीयोऽङ्कः/ पृ ६८,७१पृ ६८,७१
१२. विदग्धमाधवम्४/तृतीयाङ्कः
१३. पृ७६/ विदग्धमाधवम्/तृतीयाङ्कः
१४. विदग्धमाधवम्८/तृतीयाङ्कः
१५. विदग्धमाधवम्११/तृतीयाङ्कः





१६. विदग्धमाधवम्२१/तृतीयाङ्कः
१७. विदग्धमाधवम्८/चतुर्थोऽङ्कः
१८. विदग्धमाधवम्३८/चतुर्थोऽङ्कः
१९. विदग्धमाधवम्४१/चतुर्थोऽङ्कः
२०. विदग्धमाधवम्३१/पञ्चमोऽङ्कः
२१. विदग्धमाधवम्१८/पञ्चमोऽङ्कः
२२. उज्वलनीलमणिः/नायिकाप्रकरणम्/३१,३६,५२
२३. उज्वलनीलमणिः/राधाप्रकरणम्/३,७,१,१२,१४,१५,१७,१८
२४. विदग्धमाधवम् १३/प्रथमाङ्कः/ पृ-११
२५. विदग्धमाधवम् ३२/प्रथमाङ्कः
२६. विदग्धमाधवम् ३/तृतीयोऽङ्कः
२७. विदग्धमाधवम् १५/पञ्चमाङ्कः
२८. विदग्धमाधवम् ३४/प्रथमाङ्कः
२९. विदग्धमाधवम् ३५/प्रथमाङ्कः
३०. विदग्धमाधवम् ३६/ प्रथमाङ्कः
३१. विदग्धमाधवम् २/ द्वितीयोऽङ्कः
३२. विदग्धमाधवम् पृ ३८,४२/ द्वितीयोऽङ्कः
३३. विदग्धमाधवम् ९/ द्वितीयोऽङ्कः
३४. विदग्धमाधवम् ४१,४३/ द्वितीयोऽङ्कः
३५. विदग्धमाधवम् ५६/ द्वितीयोऽङ्कः
३६. विदग्धमाधवम् पृ९१/तृतीयाङ्कः
३७. विदग्धमाधवम् पृ९३,९९,१०५/ तृतीयाङ्कः
३८. विदग्धमाधवम् २१/चतुर्थोऽङ्कः
३९. विदग्धमाधवम् २२/ चतुर्थोऽङ्कः
४०. विदग्धमाधवम् २८/ चतुर्थोऽङ्कः
४१. विदग्धमाधवम् ४०/ चतुर्थोऽङ्कः
४२. विदग्धमाधवम् ३०/ चतुर्थोऽङ्कः

# महावीरचरिते नायको नायिका च

-डा. एम्. सुदर्शनचिपळूणकरः
सहायकाचार्यः,साहित्यविभागः
रा.सं.संस्थानम,
क.जे.सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः, मुम्बई।

संस्कृतनाटकजगति महाकवेः भवभूतेः स्थानं नितान्तं महत्त्वपूर्णं वर्तते। महाकविरयं वीरशृङ्गारकरुणरसप्रधानानि **महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम्** इति त्रीणि नाटकानि रचयामास। अस्य महाकवेः कालनिर्णयविषये सत्यामपि विप्रतिपत्तौ सामान्यतः विपश्चित्प्रवरैः कविरसौ अष्टमशताब्द्यां जात इति निर्णीयते[१]। परं तत्र कविरसौ अष्टमशताब्द्याः आदौ मध्ये अन्ते वा आसीदिति स्पष्टं वक्तुं न शक्यते। महाकविः भवभूतिः ब्राह्मणपरिवारे काश्यपगोत्रे जातः। अस्य पितामहः भट्टगोपालः, पिता नीलकण्ठः, माता जतुकर्णी च आसीत्।

**महावीरचरितम्**

नाटके ५-१० अङ्काः भवेयुः, रसश्च शृङ्गारो वीरो वा स्यादिति च नियमः[२]। तद्वत् भवभूतिप्रणीतं महावीरचरितं वीररसप्रधानं नाटकम्। नाटकेऽस्मिन् सप्ताङ्काः विद्यन्ते। यद्यपि वाल्मीकिप्रणीतं रामायणमेव रूपकस्यास्य आधारः तथापि नाटकदृष्ट्या तत्र तत्र ईषत्परिवर्तनमवलोक्यते। श्रीरामचन्द्रस्य राज्याभिषेकं यावत् नाटकेऽस्मिन् निरूपण-मवलोक्यते। तत्र च रामलक्ष्मणाभ्यां विश्वामित्राश्रमगमनम्, ताटका-सुबाहुः इत्यादीनां वधः,श्रीरामचन्द्रस्य विवाहः, परशुरामरामचन्द्रयोः युद्धम्, रामवनगमनम्, खरदूषणवधः, सीतापहरणम्, वालिवधः, सीतान्वेषणम्, रामरावणयोर्युद्धम्, रावणवधः, अयोध्यायां श्रीरामचन्द्रस्य राज्याभिषेकः इत्येवं प्रकारेण नाटकेऽस्मिन् कथावस्तु निरूपितं विद्यते। नाटकस्यादिभागे एव लङ्काधिपः रावणः सीताविवाहाभिलाषं प्रकटयति। अनन्तरं श्रीरामचन्द्रः धनुः भङ्क्त्वा सीतां





परिणीते। सीतया सह रामचन्द्रस्य विवाहवार्तां श्रुत्वा रावणः क्रुध्यति। तदनुसारं तन्मन्त्री माल्यवान् कुटिलनीतेः प्रयोगं करोति। आदौ तावत् रामेण सह योद्धुं परशुरामं प्रेरयति। किन्तु तत्र असफलः रावणः शूर्पणखां मन्थरावेषे कैकेय्याः समीपं प्रेषयति। कैकेयी रामं वनं प्रेषयति। तस्मिन् वने माल्यवान् एव सीतापहारं कारयित्वा वालिनं रामेण सह योद्धुं प्रेरयति। रामेण वाली हन्यते। अनन्तरं सुग्रीवसाहाय्येन रामः लङ्कां गत्वा युद्धे रावणं हत्वा पुष्पकविमानेन अयोध्यां प्रत्यागच्छति।

**महावीरचरिते नायकः**- सामान्यतः नाटकानि तत्तत्कालस्य समाजेन प्रभावितानि समाजकेन्द्रितानि च भवन्ति। तत्र च काव्यानाम् उद्देश्यमपि इदमस्ति यत् **रामादिवत्प्रवर्तितव्यं न रावणादिवत्** इति कृत्याकृत्यप्रवृत्तिनिवृत्तिरूपमुद्बोधनम्। भवभूतिविरचिते सप्ताङ्कयुतेऽस्मिन् महावीरचरितनाटके नायकः श्रीरामचन्द्रः एव महावीरः यश्च धीरोदात्तनायकरूपेण वर्णितः। तत्रोच्यते धीरोदात्तनायकलक्षणं दशरूपके -

**महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः।**
**स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः**[३] ॥ इति।

तत्र च महावीरचरितनाटकस्य आदिमे अङ्के रावणस्य पक्षतः कश्चित् राक्षसः रावणस्य सीताविवाहाभिलाषं प्रकटयति। तदा अनुजः लक्ष्मणः **आर्य! निशाचरपतिः देवीमिमां प्रार्थयते**[४] इति ब्रूते। तस्मिन् समये अत्यन्तमुदारः सन् उत्तरयति यथा-

**साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।**
**किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः**[५] ॥ इति।

इदमत्रास्माभिः स्मर्तव्यं यत् सर्वाणि द्रव्याणि अयाचितानि एव देयानि, किन्तु अन्नम्, विद्या, कन्या च अयाचिते सति न देया इति।

तदुक्तं यथा-

**अयाचितानि देयानि सर्वद्रव्याणि भारत!।**
**अन्नं विद्या तथा कन्या अनर्थिभ्यो न दीयते**[६]।। इति।

अनेन च इदं स्पष्टं यत् अयाचिते सति कन्या न देया इति, कन्यायाचने समेषाम् अधिकारोऽप्यस्तीति। तस्मिन्नेव समये लक्ष्मणः ब्रूते यत् –

**अति हि सौजन्यमार्यस्य, तस्मिन्नपि निसर्गवैरिणि निशाचरे बहुमानः**[९] इति।

तदानीं श्रीरामचन्द्रस्तावत् **कामं शत्रुरिति वध्यः स्यात्। न पुनरतिवीर्यमप्रमेयतपसमप्राकृतं प्राकृतवदर्हसि व्यपदेष्टुम्**[८] इति वक्ति।

अत्रास्माभिः श्रीरामचन्द्रस्य उदात्तमनोभावम् अवलोकयितुं शक्नुमः। यदा रामलक्ष्मणौ विश्वामित्रेण सह वनं गच्छतः तदा विश्वामित्रः राक्षसीं ताटकां हन्तुं श्रीरामं सूचयति। तदा रामचन्द्रः वदति यत् **भगवन्! स्त्री खल्वियम्**[९] इति। तत्र धर्मशास्त्रे तावत् उक्तमस्ति यत् स्त्रीवधो नैव कर्तव्यः[१०] इति। द्वितीयाङ्के यदा क्रोधाविष्टः परशुरामः श्रीरामनिकटमायाति तदा सीता अत्यन्तं भीता जायते। तदा श्रीरामः सीतां प्रति क्षत्रियोचितं वीरं सविनयं च वचनं ब्रूते यथा-

**मुनिरयमथ वीरस्तादृशस्तत्प्रियं मे**
**विरमतु परिकम्पः कातरे क्षत्रियासि।**
**तपसि विततकीर्तेर्दर्पकण्डूलदोष्णः**
**परिचरणसमर्थो राघवक्षत्रियोऽहम्**[११] ॥ इति।

यदा च श्रीरामपरशुरामयोः वाग्युद्धं प्रवर्तते तदा परशुरामः स्वकीयस्य परशोः प्रशंसां करोति। तदानीं मुनौ परशुरामे आदरं नैव परित्यजति श्रीरामचन्द्रः। वदति च यथा-

**अयं स किल यः सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन सहस्रपरिवत्सरान्तेवासिने तुभ्यं प्रसादीकृतः परशुः**[१२] इति। अनन्तरञ्च बाले श्रीरामचन्द्रे प्रीतिं प्रकटयन् परशुरामः परिरम्भणेच्छां प्रकटयति। तदा श्रीरामः **भगवन्! परिरम्भणं प्रस्तुतप्रतीपमेतत्**[१३] इति वदन् अधुना नायं परिरम्भणस्य कालः अपि तु युद्धस्य इति वीरोचितं वचनं ब्रूते। अनन्तरं कलहस्य तीव्रतायां परशुरामस्तावत्-

**सम्भूयैव सुखानि चेतसि परं भूमानमातन्वते**
**यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।**
**स त्वं नूतन एव कङ्कणधरः श्रीमान्प्रियश्चेतसो**





**हन्तव्यः परिभूतवान्गुरुमिति प्रागेव दूयामहे**[१४]॥ इति अनुकम्पां दर्शयति।

तदा पुनः रामचन्द्रः वदति यत् **भार्गव ! ज्ञायते मामनुकम्पसे**[१५] इति। अनन्तरं परशुरामः रोषावेषेण **मय्येव भ्रुकुटीधरः संवृत्तः। अरे क्षत्रियडिम्भ ! त्वं किल शिशुर्नववधूटिकापरिग्रहः सुन्दर इत्यपूर्वमुपतप्यते अस्माभिः।**

**सुप्रसिद्धः प्रवादोऽयमितिहेतीह गीयते।**
**जामदग्न्यः स्वयं रामो मातुर्मूर्धानमच्छिनत्**[१६] ॥ इति वदति।

तदा परशुराम इति दोषोद्घोषयितुं न विभेति श्रीरामचन्द्रः। वदति च यथा **नृशंसता हि नाम पुरुषदोषः। तत्र का विकत्थना?**[१७] इति। श्रीरामपरशुरामयोः कलहे प्रवर्तमाने सति अन्ते जनकशतानन्दौ प्रविश्य **वत्स रामभद्र ! श्वश्रूजनस्त्वामाह्वयति। तद्गम्यताम्**[१८] इति वदतः। तदानीं रामचन्द्रः परशुरामसकाशे गुरवः वदन्ति इति अत्रैव युद्धं परित्यज्य गच्छामि, नान्यथा[१९] इति स्पष्टीकरोति। अनन्तरं चतुर्थेऽङ्के रामचन्द्रेण पराजितः परशुरामः-

**स एष रामः सौम्यत्वादचण्डश्चण्डशासनः।**
**यस्य प्रतिष्ठितं जैत्रं जामदग्न्येऽपि शासनम्**[२०] ॥ इति वदति।

तदा भक्त्या रामचन्द्रः **एष वो रामशिरसा प्रणामपर्यायः**[२१] इति परशुरामविषयकम् आदरं प्रकटयति। इत्येवं प्रकारेण महाकविना भवभूतिना महावीरचरिते मनोज्ञरूपेण नायकः श्रीरामचन्द्रः महावीरत्वेन निरूपितः।

**महावीरचरिते नायिका**

नाटकेऽस्मिन् नायिका सीता। किन्तु नाटकमिदं वीररसप्रधानमिति हेतोः नात्र नायिकायाः तथा प्राधान्यं विद्यते। कविना नाटके कोमलभावनाभिः संयुतायाः नायिकायाः सीतायाः पात्रं चित्रितम्। यदा नाटकस्य प्रथमेऽङ्के सीता प्रथमवारं श्रीरामचन्द्रं पश्यति तदा वदति यत् **सौम्यदर्शनोऽयम्**[२२] इति। अनन्तरञ्च यदा विश्वामित्रः ताटकावधार्थं राममादिशति तदा रामचन्द्रे सीतायाः स्नेहभावः प्रकाशमायाति। तस्मिन् समये सा वदति यथा **हा धिक्, एष एवात्र नियुक्तः**[२३] इति। अयमेव स्नेहः रामेण सह विवाहानन्तरं प्रणयरूपं प्राप्नोति। परशुरामस्य क्रूरतया भीता सीता परशुरामं सम्मुखीकर्तुं रामस्य अवरोधं

करोति। सा च वदति यत् आर्यपुत्र ! न तावद्युष्माभिर्गन्तव्यं यावत्तातो नागच्छति[२४] इति। इत्येवं प्रकारेण महाकविना भवभूतिना नायिकायाः सीतायाः पात्रचित्रणं कृतम्।

एवञ्च श्रीरामचन्द्रस्य प्रभावं ख्यापयितुं रामायणस्य मूलकथायां तत्र तत्र परिवर्तनं विधाय अत्यन्तं हृद्यरूपेण नायकस्य श्रीरामचन्द्रस्य नायिकायाः सीतायाश्च पात्रचित्रणं भवभूतिनात्र विहितम्।

*******

## सन्दर्भाः

१.History of Classical Sanskrit Literature

२.नाट्यशास्त्रम् १८/१०-४३, साहित्यदर्पणः ६/७-१९

३.दशरूपकम् २/ ४-५, अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ (साहित्यदर्पणः ३/३२)

४.महावीरचरितम्/१ अङ्कः

५.तत्रैव १.३१

६.द्र.व्यक्तिविवेकः/ प्रथमविमर्शः

७.महावीरचरितम्/१ अङ्कः

८.तत्रैव

९.तत्रैव

१०.स्वच्छन्दगा हि या नारी तस्यास्त्यागो विधीयते। न चैव स्त्रीवधः कार्यो न चैवाङ्गवियोजनम्॥/ बृहस्पतिस्मृतिः।

११.महावीरचरितम् २.२७

१२.तत्रैव

१३.तत्रैव

१४.तत्रैव २.४५

१५.तत्रैव

१६.तत्रैव २.४७

१७.तत्रैव





१८.तत्रैव

१९.जामदग्न्य ! एवमादिशन्ति गुरवः/ तत्रैव

२०.तत्रैव ४.२४

२१.तत्रैव

२२.तत्रैव/१ अङ्कः

२३.तत्रैव

२४.तत्रैव/ २ अङ्कः


## आकरग्रन्थाः

१.महावीरचरितम्

२.नाट्यशास्त्रम्

३.दशरूपकम्

४.साहित्यदर्पणः

५.संस्कृत साहित्य का इतिहास / डा.उमाशङ्कर शर्मा

६.बृहस्पतिस्मृतिः

७.व्यक्तिविवेकः

८.History Of Classical Sanskrit Literature / M.Krishnamachariar


*****************

# मध्यमव्यायोगे नायकः

-हितेशः त्रिवेदी
शोधच्छात्रः,
क. जे. सो.संस्कृतविद्यापीठम्,
विद्याविहारः, मुम्बई।

संस्कृतसाहित्यजगति भासप्रणीतानि त्रयोदश नाटकानि विलसन्ति। भासः श्रेष्ठनाट्यकथानिर्वाहको वर्तते। अस्य कृतिषु अस्वाभाविकतायाः गन्धोऽपि नास्ति। तेषु नाटकेषु 'मध्यमव्यायोगः' व्यासप्रणीतस्य महाभारत-महाकाव्यस्य आदिपर्वणः समुद्धृतमस्ति। मध्यमव्यायोगः इत्यस्मिन् पदे वाक्यद्वयम्, मध्यमः व्यायोगश्च। मध्यमः अर्थात् **'मध्यमपाण्डुपुत्रमधिकृत्य'** व्यायोगः अर्थात् **'वि'** तथा **'आङ्'** उपसर्गाभ्यां **'युज्'** धातोः **'घञ्'** प्रत्ययात् निष्पन्नः **व्यायोगः** अर्थात् विशेषेण आसमन्तात् युज्यते कार्यार्थं संरभ्यतेऽत्रेति व्यायोगः।

यत् किमपि घटनाविषये सम्यक् रीत्या अवगम्य योजयति इति व्यायोगः इति कृतो व्यायोगः मध्यमव्यायोगः।

एवमेव कुन्ती भागवते मध्यमविषये कथयति यत् -

**तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः।**
**आस्ते परिघबाहुः स <u>मध्यमः</u> पाण्डवो बली।।**[1]

मध्यमः भीमः कुन्तीतनयत्वावच्छिन्नपाण्डवेषु तस्यैव मध्यमत्वात् । मध्यममुद्दिश्य कृतो व्यायोगः इति मध्यमव्यायोगः।

मध्यस्य मध्यमपाण्डवस्य भीमस्य (राक्षसी) हिडिम्बया सह विशेषेण आयोगः अर्थात् संयोगः यस्मिन्निति मध्यमव्यायोगः।

मध्यमौ भीमः ब्राह्मणकुमारश्च व्यायुज्येते अस्मिन् इति तत् नाटकम् इति मध्यमव्यायोगः नाटतकम् अस्य मतस्य समर्थनं पुशाळकरः अपि Bhasa : A study इत्यस्मिन् पुस्तके कथयति '.... the work where the two Madhyamas are brought together'[2]





साहित्यशास्त्रे रूपकस्य दश प्रकाराः सन्ति तेषु व्यायोगः एकः प्रकारः भवति। व्यायोगः इत्यस्मिन् विषये विश्वनाथः साहित्यदर्पणे कथयति –

**ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।**
**हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः।। 231।।**
**एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।**
**कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः।। 232।।**
**राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।**
**हास्यशृङ्गारशान्तेभ्य इतरेत्राङ्गिनो रसाः।।**[3] 233।।

अतः अत्र ख्यातः महाभारतमाश्रित्य इतिवृत्तः, स्वल्पस्त्रीजनसंयुतः, गर्भविमर्शाभ्यां हीनः, नरैः बहुभिः आश्रितः, एकाङ्कः, कैशिकीवृत्तिरहितः, प्रख्यात धीरोद्धतः नायकः, हास्य-शृङ्गार-शान्तेभ्यः इतरः वीरः रौद्रः करुणश्चेति रसाः सन्ति। एतानि यस्मिन् नाटके सन्ति सः व्यायोगः भवति।

**भीमः**

कविः भासः मध्यमव्यायोगे महाभारतस्य कथायाः किञ्चिदंशं गृहीत्वा स्वकल्पनया तथा मौलिकोद्भावनया परिपूर्णं रूपकम् अकरोत्। अतः अत्र भीमस्य यत् व्यक्तित्वं वयं पश्यामः तत् सर्वं केवलं कवेः कल्पना एव अस्ति।

यद्यपि सम्पूर्णमहत्त्वपूर्णघटनायाः नियन्ता घटोत्कचः, किन्तु भीमस्य व्यक्तित्वं नाटके अतीवप्रभावोत्पादकं वर्तते। अत्र भीमः धीरोद्धतः नायकः भवति। धीरोद्धतस्य लक्षणं यथा -

**दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः।**
**धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः।।**[4]

**दर्पः** = शौर्यादिमदाः, मात्सर्यम् = असहनता, मन्त्रवलेनाविद्यमानवस्तुप्रकाशनं माया, छद्म = वञ्चनामात्रम्, चलः = अनवस्थितः, चण्डः = रौद्रः, विकत्थनः = स्वगुणाशंसी, धीरोद्धतो भवति।

**दर्पः = शौर्यादिमदाः** - यदा ब्राह्मणः भीमं - भो मध्यम ! परित्रायस्व ब्राह्मणकुलम्।

अतः अत्र दर्पयुक्तेन भीमेनोक्तम् –

**न भेतव्यम् , न भेतव्यम्  इति**[5]

तथा च

**कुतो भयमार्यस्य।**[6]

**मात्सर्यम् = असहनता** - यथा ब्राह्मणपरिवारस्य व्यथां ज्ञात्वा रक्षायै तत्परः। घटोत्कचं प्रति कथयति यत् –

**किमर्थं ब्राह्मणजनमपराध्यसि।**
**पुत्र नक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च।**
**वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवोत्थितः।।**[7]
**निवृत्तव्यवहारोऽयं सदारस्तनयैः सह।**
**सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः।।**[8]

**मायापरत्वम्** – घटोत्कचः मायाविन् तथा (मन्त्रबलेनाविद्यमानवस्तुप्रकाशेन) मायापाशेन भीमं बध्नाति तथा भीमः महेश्वरप्रसादाल्लब्धो मायापाशमोक्षमन्त्रेण मायामपनयति।

**छद्म = वञ्चनामात्रम्** – स्वचातुर्येण घटोत्कचं क्षमादानं दत्वा तं गर्वं तथा बलस्योपरि प्रसन्नतामपि प्रकटयति।

**विकत्थनः = स्वगुणाशंसी** –
आत्मप्रशंसानिरतोऽयं भीमः वदति।

**मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः।**
**मध्यमोऽहं क्षितौ भद्र भ्रातृणामपि मध्यमः।।**[9]
**मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः।**
**भवे च मध्यमो लोके सर्वकार्येषु मध्यमः।।**[10]

**भीमः** = भयङ्करः, शारीरिकदृष्ट्या बलवान् अपि सहृदयः, सः सहृदयेण संत्रस्तदलितब्राह्मणस्योपरि सहानुभूतिं दर्शयति। इति दृष्ट्वा वयं कथयितुं शक्नुमः भीमस्य हृदि ब्राह्मणानां प्रति आदरभावः प्रेमः सम्मानश्चेति वर्तन्ते। तथा स्वयं शास्त्रानुरूपम् आचरणमपि करोति स्म। भीमस्य व्यक्तित्वस्य प्रभावः घटोत्कचस्योपरि अपि भवति, नाटके घटोत्कचेन उक्तम् –





**न खल्वयं ब्राह्मणवटुः। अहो दर्शनीयोऽयं पुरुषः।**

किञ्च -

**सिंहाकृतिः कनकतालसमानबाहुर्मध्ये तनुर्गरुडपक्षविलिप्तपक्षः।**
**विष्णुर्भवेद्विकसिताम्बुजपत्रनेत्रो नेत्रे ममाहरति बन्धुरिवागतोऽयम्।।** इति[11]

भीमः युद्धे घटोत्कचं जित्वा **गर्वेण** पौरुषमदर्शयत् तथा अन्ते **स्वचातुर्येण** घटोत्कचं क्षमादानं दत्वा तं गर्वं तथा बलस्योपरि प्रसन्नतामपि प्रकटयति। भीमः क्षत्रियस्य कर्तव्यं किमस्ति इति सम्यक् रीत्या जानाति अतः सः प्राणैरपि संत्रस्तब्राह्मणपरिवारजनानां रक्षां करोति।

भीमे आत्माभिमानेन सह परस्य गुणाग्राहीभावोऽपि भवति। अतः सः घटोत्कचं दृष्ट्वा मनसि कथयति यथा –

**भ्रातृणां मम सर्वेषां कोऽयं भो गुणतस्करः।**
**दृष्टैतद्बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम्।।**[12]

मातागुरुजनानां ब्राह्मणानाञ्च प्रति तस्य हृदि सदैव सम्मानः प्रेमभावः आदरभावश्च भवति। यथा चोक्तं येन -

**माता किल मनुष्याणां देवतानां च दैवतम्।**
**मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः।।**[13]

नाटकस्यान्ते हिडिम्वां दृष्ट्वा तस्य हृदि प्रेम्णः प्रादुर्भावः भवति तथा तस्याः सहृदयतायाः प्रशंसामपि करोति, तेन यदुक्तम् नाटके -

**अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने।**
**जातकारुण्यया देवि सन्तापो नाशितस्त्वया।।**[14]

अजानतः घटोत्कचस्य स्वपित्रा भीमेन सह युद्धः तथा हिडिम्वया सम्मेलनं सर्वथा कवेः केवलं कल्पनायाः परिणामो वर्तते।

अस्याः घटनायाः नियोजनेन नाटकस्य नाटकीयतायाः विकासः तथा अङ्गीरसः वीरः एवं रौद्र-करुण-रसयोः अपि अङ्गत्वेन क्वचित् प्रवृत्तिः दृश्यते। महाकविभासेन इतस्ततः विकीर्णानां कथासूत्राणां समायोजनं नवीनाकारेषु रङ्गमञ्चोपरि प्रस्तुतं कृतम्। यथा व्यायोगे ब्राह्मणपरिवारजनानाम् उपयोगम्।

भासः नाटकेऽस्मिन् ब्राह्मणपरिवारजनानां मुक्तिं न केवलं देवकृपया अथवा चमत्कारद्वारेण अकारयत् अपितु महाबलवतः भीमस्य उदारात्मसमर्पणद्वारेण नाटकेऽस्मिन् चमत्कारस्योद्भावना लक्ष्यते। एवमेव भारतीयादर्शाणां चरमनिदर्शनं नाटकेऽस्मिन् तेन प्रस्तुतं कृतम् ।

व्यायोगेऽस्मिन् धीरोद्धतनायकोचित् सर्वे गुणाः भीमे दृश्यन्ते। अतः भीमः धीरोद्धतः नायकः अस्ति।

## पादसूची

1. भगवद्यानपर्व 10 / 27 ; 2. Bhasa : A study p. 201
3. साहित्यदर्पणस्य षष्ठः परिच्छेदः ; 4. दशरूपक-2 प्रकाश (धनञ्जयः)
5. मध्यमव्यायोगे पृ. 27 ; 6. मध्यमव्यायोगे पृ. 27
7. मध्यमव्यायोगे श्लोकः 33 ; 8. मध्यमव्यायोगे श्लोकः 34
9. मध्यमव्यायोगे श्लोकः 28 ; 10. मध्यमव्यायोगे श्लोकः 29
11. मध्यमव्यायोगे श्लोकः 27 ; 12. मध्यमव्यायोगे श्लोकः 35
13. मध्यमव्यायोगे श्लोकः 37 ; 14. मध्यमव्यायोगे श्लोकः 49

## ग्रन्थसूची


1. मध्यमव्यायोगः भासः व्याख्याकारः पं. श्रीरामजीमिश्र चौखम्बा विद्याभवन (वाराणसी)संस्करण 2012
2. साहित्यदर्पणः-विश्वनाथकविराजः-शालिग्रामशास्त्रिसम्पादित, मोतीलाल बनारसीदास पुनः मुद्रण 2000
3. संस्कृत साहित्य का विशद इतिहास- डॉ. पुष्पा गुप्ता-ईस्टर्न बुक लिंकर्स- प्रथम संस्करण 1994
4. Bhasa – A Study-Dr. Pusalker-1940
5. दशरूपकम्– धनञ्जयः-धनिककृतावलोकसहितम्- चौखम्बा प्रकाशन् 2011
6. भागवतपुराणम्-गीताप्रेस-गोरखपुर, प्रथमसंस्करणम्


***************





# मालविकाग्निमित्रे नायको नायिका च


-श्री. सत्यनारायणवसिष्ठः
शोधच्छात्रः,
क. जे. सोमैया सं. विद्यापीठम्,
विद्याविहारः, मुम्बई।


संस्कृतस्य सुविशाले साहित्ये नाटकं महत्त्वपूर्णं स्थानं भजते। उक्तं च **काव्येषु नाटकं रम्यम्**[1] इति। इत्यनेन श्लोकांशेन ज्ञायते यत् साहित्यशास्त्रे नाटकानां सर्वोत्कृष्टता अस्ति। एतस्मादेव भरतमुनिना **नाट्यं पञ्चमो वेदः**[2] इति निगदितम्। साहित्यशास्त्रे बहूनि नाटकानि विद्यन्ते। तेषु कालिदासस्य नाटकानि अतीव मनोहराणि सन्ति। मालविकाग्निमित्रमपि महाकविकालिदासकृतं नाटकमस्ति। एतत् कालिदासस्य प्रथमं नाटकमस्तीति केचन विद्वांसः मन्यन्ते।

अस्मिन् शृङ्गारसप्रधाननाटके महाकविना मालविकाग्निमित्रयोः प्रेमप्रसङ्गः उत्तमतया प्रदर्शितः। अभिनयदृष्ट्या कथानकमाधुर्येण च नाटकमिदमतीव मनोहरं वर्तते। अस्मिन् नाटके धारिण्याश्चरित्रं सर्वापेक्षया रमणीयं चित्रितम्, सा हि राजानं कामुकमुत्प्रेक्षमाणाऽनवगतां मालविकां तद्दर्शनपथादेव रक्षति न च तां राजधान्याः दूरं स्थापयति, न वा तामुत्पीडयति। क्रिस्तोः पूर्वं विदिशायां अग्निमित्रः नामको राजा आसीत्। तस्य द्वे पत्न्यौ आस्ताम्, तयोः प्रथमा धारिणी द्वितीया इरावती। एवमेव विदर्भां माधवसेनः शासयति स्म। सः स्वस्याः भगिन्याः मालविकायाः विवाहः अग्निमित्रेण कारयितुमैच्छत्। एतदर्थं सः अग्निमित्रं द्रष्टुं विदिशां गन्तुकामः आसीत्। तदेव तस्य भ्राता यज्ञसेनः माधवसेनं जयति। तदा माधवसेनस्य मन्त्री मालविकां नीत्वा विदिशायात्रीणां व्यूढे सम्मिल्य विदिशां प्रत्यगच्छत्। मार्गे यदा ते श्रान्ताः सन्तः विश्रामं कुर्वन्तः आसन् तदा दस्यूनाम् आक्रमणमभवत्। ते मन्त्रीं मारयित्वा मालविकां नयन्ति स्म। ते मालविकां वीरसेनाय समार्पयन्। वीरसेनः तां स्वभगीन्यै धारिण्यै नाट्यशिक्षणाय समार्पयत्। धारिणी तां नाट्यशिक्षां

प्रापयितुं नाट्यशिक्षकगणदासस्य पार्श्वे प्रैषयत्। एकदा धारिणी स्वचित्रनिर्माणमकरोत्। तस्मिन् चित्रे परिजनरूपेण मालविकायाः चित्रमपि आसीत्। चित्रशालायां तत् चित्रं दृष्ट्वा राजा अग्निमित्रः सा केति धारिणीमपृच्छत्। तदा वसुलक्ष्मीः वदति एषा मालविका अस्तीति। तां चित्रितां दृष्ट्वा अग्निमित्रः तस्याः रूपमाधुर्योपरि मन्त्रमुग्धः जातः। तया सह मेलनाय राजा विदुषकं मार्गं पप्रच्छ। विदुषकः नाट्यशिक्षकयोः हरदत्तगणदासयोर्मध्ये श्रेष्ठः कः? इति विषयकं कलहमकारयत्। तयोः कलहस्य निवारणाय राजा नाट्यप्रयोगं मार्गमपश्यत्। नाट्यप्रयोगे राजा देवीं धारिणीं कौशिकीं च निर्णायकरूपेण नियोजितवान्। प्रथमः गणदासः नाट्यप्रयोगं कृतवान्। प्रयोगे मालविका नाट्यं प्रस्तुतवती। तदा अग्निमित्रः तां दृष्ट्वा वर्णयति।

विदूषकः बकुलावलिकया सह सम्मिल्य मालविकाराजयोः मेलनाय प्रमदवने आह्वयति स्म। यदा तयोः मेलनं जातं भवति तदा राज्ञी इरावती तत्र आगतवती। तदैव अग्निमित्रः तां वदति यद् अहं तु भवत्याः प्रतीक्षारतो एताभ्यां साकं वार्तां कुर्वन् अस्मि इति।

तदनन्तरं राज्ञी धारिणी बकुलावलिकां मालविकां च कारागारे स्थापितवती। अग्निमित्रः विदूषकं तयोः कारागारात् विमुक्त्यर्थं उपायं करोतु इति अवदत्। विदूषकः नीलवर्णवेषे आगत्य न्यगदत् यत् राज्ञ्याः धारिण्याः दर्शनार्थमहं पुष्पाण्यानेतुं प्रमदवनं गतवान् तत्र अहं कृष्णसर्पेण दष्टः, विषचिकित्सार्थं ध्रुवसिद्धिः चिकित्सकः नागमुद्रायाः आवश्यकतास्तीति च अवदत्। राज्ञी धारिणी ब्राह्मणस्य जीवनरक्षणाय स्वीयनाग-मुद्राङ्कितम् अङ्गुलीयकं अदात्। अङ्गुलीयकम् दृष्ट्वैव तस्य कृत्रिमो विषवेगः गतः। तदेव अङ्गुलीयकम् प्रदर्शयित्वा कारागारात् बकुलावलिकां मालविकां च अनिष्कासयत्। अग्निमित्रः, मालविका, विदुषकः बकुलावलिका च सर्वे समुद्रगृहे अमिलन्। समुद्रगृहे अग्निमित्रमालविकयोः मेलनं प्रचलदासीत् तदा इरावती परिचारिकया सह तत्र आगतवती। इरावती तयोः मेलनं दृष्ट्वा क्रुद्धा जाता। सा एतत् वृतान्तं देव्यै धारिण्यै सूचयितुं परिचारिकां प्रेषितवती।





अग्निमित्रः विदर्भदेशात् सूचनां प्राप्तवान् यत् सैनिकाः यज्ञसेनं अजयन्। माधवसेनं बन्दीगृहात् मुक्तं कारितवन्तः। सर्वे तपनीयाशोकस्य कुसुमसमृद्धिं द्रष्टुमगच्छन्। तत्र धारिणी मालविकां वैवाहिकवेशेन आनयत्। तस्मिन् एव समये अग्निमित्रस्य पिता पुष्यमित्रः दूतेन सह कुमारवसुमित्रस्य यवनेभ्यः अश्वमेधाश्वस्य रक्षणविषयकं पत्रं प्रेषितवान्। विदर्भदेशात् आगताः बालिकाः सर्वेषां समक्षं सूचितवत्यः यत् मालविका राजकुमारी अस्तीति। तदनन्तरमग्निमित्रः धारिणीरावत्योः अनुमत्या मालविकया सह विवाहं कृतवान्।

**नायकः**- मालविकाग्निमित्रस्य नाटकस्य कुलीनः नायकोऽस्ति अग्निमित्रः। एषः शुंगवंशस्य राज्ञः पुष्यमित्रस्य तनयः। अग्निमित्रः धीरललितो दक्षिणश्च नायकोऽस्ति। धीरललितस्य लक्षणं यथा साहित्यदर्पणे **निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्**[3]। इति। नाटकस्य कथानकानुसारं धीरललितनायकस्य सर्वे गुणाः राजनि अग्निमित्रे सन्ति। तद्यथा–

**निश्चिन्तः**–राज्यचिन्तारहितः (सचिवायत्तसिद्धिः) अत्र अग्निमित्रोऽपि सम्पूर्णं राजकार्यं सचिवैः कारयति। यथा–तेन **ह्यवितथं तन्त्रवारवचनं। इदमेव वचनं निमित्तमुपादाय समुद्योज्यतां सेनाधिपतिः**[4]। इति।

**मृदुः**–कोमलस्वभावः अत्र अग्निमित्रः मृदुः नायको विद्यते। एतस्य विषयस्य ज्ञानं प्रथमे अङ्के हरदत्तगणदासयोः नाट्यशिक्षणविषयककलहं नाट्यप्रयोगेण निरवारयति तदर्थं तस्मिन् नाट्यप्रयोगे धारिणीं निर्णायकरूपेण योजयति। अन्ते च यदा राजा वदति **मौद्गल्य! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि।**

**तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे।**
**नक्तंदिवं विभज्योभौ शीतोष्णाकिरणाविव**[5]।। इति।

अस्य पद्यस्येदं तात्पर्यं यत् विदर्भराज्यस्य भागद्वयम् कृत्वा एकं यज्ञसेनाय अपरं माधवसेनाय ददातु इति। एषः अग्रे कञ्चुकिनं वदति **तेन हि मन्त्रिपरिषदं ब्रूहि। सेनान्ये वीरसेनाय लेख्यतामेव क्रियतामिति।** इतोऽपि **मौदग्ल्य! यज्ञसेनश्यालमूरीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः**[6]।

**अनिशं कलापरः**-निरन्तरं नृत्यवाद्याऽऽसक्तः। अग्निमित्रः कलाप्रियः आसीत्। सः रङ्गभवने एकस्मिन् दिने गणदासस्य नाट्यप्रयोगं कारयति तथा हरदत्तं वदति भवान् श्वः नाट्यप्रयोगं करोतु इति। अथ नाट्यप्रयोगसमये साक्षान्मालविकां दृष्ट्वा वदति –

**चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्।**
**संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता[7]।।**

**दक्षिणः** – एतस्य नायकस्य दर्पणे यथा– **एषु त्वनेकमहिलासमरागो दक्षिणः कथितः[8]।**

अस्मिन् नाटके अग्निमित्रः स्वीयराज्ञ्योः धारिणी-इरावत्योः उपरि प्रेम प्रदर्शयति तथा नाट्यप्रयोगसमये मालविकां वर्णयति यथा –

**दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः**
**संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।**
**मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली**
**छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्याः वपुः[9]।।** इति।

अन्ते च धरिणी-इरावत्योः अनुमत्या मालविकया सह विवाहं कृतवान्।

**नायिका-** मालविकाग्निमित्रे नाटके नायिका मालविका। एषा गीतनृत्यादिभिः सुशिक्षिता रूपयौवनसम्पन्ना सलज्जा सुन्दरी युवतिश्चास्ति। अत एवाग्निमित्रः एतस्याः सर्वाङ्गीणं सौन्दर्यमेवं वर्णयति। यथा-

**दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः**
**संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।**
**मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली**
**छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्याः वपुः।।**
**विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।**
**अत्यायतं नयनयोर्मम जीवितमेतदायाति[10]।।**





**लज्जावती**

मालविका यदा बकुलावलिकया सह प्रमदवने अगच्छत् तदा सा बकुलावलिकां प्रति स्वमनसः विचारं न्यगदत्। तद्यथा-

**अविज्ञातहृदयं भर्तारभमिलषन्त्यात्मनौऽपि तावल्लज्जे। कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम्। न जानेऽप्रतिकारगुरूकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति[11]।**

अत्र मालविका राजानं प्रति स्वकीयं मनोभावं कथमहं प्रकटयामीति वक्तुमकामयत्।

**सुशिष्या**

सा सुशिष्या आसीद् इति नाट्यप्रयोगसमये तस्याः नृत्यं दृष्ट्वा अग्निमित्रः अवदत्।

**छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्याः वपुः[12]।।**

इत्युक्ते नर्त्तयितुर्नृत्याचार्यस्य गणदासस्य मनसि हृदये यथैव यत्प्रकारकमेव छन्दः अभिप्रायः **अभिप्रायश्छन्दः आशयः[13]** इत्यमरः। तथैव तेनैव प्रकारेण अस्या मालविकाया वपुः शरीरं श्लिष्टं शिक्षाभ्यासादिना योजितं स्वभावसुन्दर्या अस्या नाट्याचार्योपदेशवशतो भावसमावेशात् समेधितं रूपमिति भावः।

**परकीया कन्या**

मालविका परकीया कन्यकास्ति। यतो हि सा तस्य भ्रातुः माधवसेनस्य संरक्षणे आसीत्। सः तस्याः विवाहः अग्निमित्रेण कारयितुमिच्छति। परकीयाकन्यायाः विषये दर्पणे यथा- **कन्या त्वजातोपमया सलज्जा नवयौवना[14]।।** इति।

**अनुरागिणी**

मालविका अपि गानं कामयते स्म। सा स्वीयानुरागं नाट्यप्रयोगसमये चतुष्पद्यं गायन्ती प्राकटयत्।

**दुर्लभः प्रियो मे तस्मिन् भव हृदय निराश-**
**महो अपाङ्गो मे परिस्फुरति किममि वामः।**

**एषः स चिरदृष्टः कथं पुनरुपनेतव्यो नाथ**
**मां पराधीनां त्वयि परिगणय सतृष्णाम्[15]।।**

मालविकाग्निमित्रं श्रृङ्गारसप्रधाननाटकमस्ति। मालविकाग्निमित्रे कालिदासेन अतीव मधुरतया रोचकतया च मालविकाग्निमित्रयोः प्रेमप्रसङ्गः प्रदर्शितः।।

**संक्षेपसूची**

1. अभिज्ञानशकुन्तलम् भूमिका पृष्ठाङ्क ५
2. नाट्यशास्त्रम् प्रथमोऽध्यायः
3. साहित्यदर्पणः ६.
4. मालविकाग्निमित्रम् प्रथमोऽङ्कः पृष्ठाङ्कः २५
5. मालविकाग्निमित्रम् पञ्चमोऽङ्कः पृष्ठाङ्कः २२३
6. मालविकाग्निमित्रम् पञ्चमोऽङ्कः पृष्ठाङ्कः २३१
7. मालविकाग्निमित्रम् द्वितीयोऽङ्कः पृष्ठाङ्कः ५८
8. साहित्यदर्पणः ६.
9. मालविकाग्निमित्रम् द्वितीयोऽङ्कः पृष्ठाङ्कः५९
10.मालविकाग्निमित्रम् द्वितीयोऽङ्कः पृष्ठाङ्कः५९
11.मालविकाग्निमित्रम् तृतीयोऽङ्कः पृष्ठाङ्कः९४
12.मालविकाग्निमित्रम् द्वितीयोऽङ्कः पृष्ठाङ्कः५९
13 अमरकोशः
16. साहित्यदर्पणः६.
17. मालविकाग्निमित्रम् द्वितीयोऽङ्कः पृष्ठाङ्कः६०

**सन्दर्भग्रन्थसूची**

१. नाट्यशास्त्रम् भरतमुनिविरचितम्, परिमल पब्लिकेशन, दिल्ली, प्रथमसंस्करणम् १९९८

२. साहित्यदर्पणः विश्वनाथविरचितम्, काशीग्रन्थमाला १४५, चौखम्बासंस्कृतसंस्थान, वाराणसी, पुनर्मुद्रणम्- २०११।





३. निबन्धशतकम्, डा. कपिलदेवद्विवेदी, विश्वविद्यालयप्रकाशनम्, वाराणसी, पञ्चदशसंस्करणम् २०१३।

४. ध्वन्यालोकः,आनन्दवर्धनविरचितम्, आचार्यचण्डिकाप्रसादशुक्लसम्पादितः, विश्वविद्यालयप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् १९८१

५. काव्यप्रकाशः मम्मटविरचितम्, नागेश्वरी टीकायुक्तः, चौखम्बासंस्कृतसंस्थान, वाराणसी, अष्टमसंस्करणम्, १९९४।

६. काव्यादर्शः, दण्डीविरचितः, श्रीशिवनारायणशास्त्री, परिमल पब्लिकेशन, दिल्ली।

७. अग्निपुराणम्, गीताप्रेस गोरखपुर, प्रथमसंस्करणम्, २००९।

८. काव्यालङ्कारः, श्रीभामहाचार्येणविरचितम्, विहाराष्ट्रभाषापरिषद्, पटना- १९६२।

९. अमरकोशः, अमरसिंहविरचितम्।

***************

# विक्रमोर्वशीये नायको नायिका च

- श्रीमती अश्विनी कदमः
अनुसन्धात्री,
क. जे. सोमैयासंस्कृतविद्यापीठम्।

रसः नाट्यम्। नाट्यमपि रसः। **"नहि रसादृते कश्चिदर्थः प्रतीयते"**।[1] इत्युक्तदिशा रसः प्रमुखं तत्त्वम्। तस्मान्नाट्ये रसस्य प्राधान्यं वर्त्तते। एवं नाट्ये रसः, रसेषु च शृङ्गारः श्रेष्ठः इत्येतत्सर्वैः स्वीकृतमेव। नाटकेषु नायकस्य नायिकयाः च परस्परानुरागः सामाजिकेषु रतिं जनयति। तेषां कार्यकलापाः रतिमनुभावयन्ति। चिन्ताहर्षादयः रतिं पोषयित्वा सामाजिकेषु शृङ्गाररसरूपं प्रकल्पयन्ति इति भरतमुनिना 'नाट्यशास्त्रे रससिद्धान्तस्याधारभूते रससूत्रे प्रतिपादितमस्ति। तद्यथा **"विभावानुभावव्यभिचारि- संयोगाद्रसनिष्पत्तिः"** इति। भरतस्तु विभावो नाम विज्ञानार्थः इति वदति। विभावः कारणं निमित्तं हेतुरिति पर्यायाः।

**बहवोऽर्थाः विभाव्यन्ते वागङ्गाभिनयाश्रयाः।**
**अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥**[2] इति।

स च विभावो द्विविधः -

१) आलम्बनविभावः २) उद्दीपनविभावश्च

यथा लोके सीतादिविषयणी या रामचन्द्रादिनां रतिः तद्बोधकरूपेण प्रसिद्धाः विभावाः। तत्रालम्बनविभावाः नायकः, नायिका एवमदयाः। यतो हि तेषामेवाश्रयाद् रसोद्गमः। चन्द्रचन्दनोपवनादयः ये तावद्रसमुद्दीपयन्ति ते उद्दीपनविभावाः। शृङ्गारे नायकस्य नायिकायाश्च निरूपणं, नायिकानां नखशिखादिविवेचनमपि साहित्यशास्त्रे कोविदानां रसिकानाञ्चाकर्षणं वर्त्तते। काव्येषु तथा नाटकेषु नायकवर्णनादपि -नायिकावर्णनं किमपि महत्तरं स्थानं भजते।।काव्यं दृश्यश्रव्यभेदेन द्विधा विभज्यते। श्रवणेन्द्रियग्राह्यं सर्गादिबन्धं काव्यं श्रव्यकाव्यमिति कथ्यते। दृश्यं तत्राभिनेयम्। तत्र दृश्यकाव्ये रूपकोपरूपकाणीति भेदाः भवन्ति।।





प्रस्तुतं विक्रमोर्वशीयमुपरूकान्तर्गतं त्रोटकमस्ति। आचार्यविश्वनाथानुसारेण त्रोटकलक्षणं यथा-

**सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।**
**त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम्॥**[3]

सप्ताऽष्टनवपञ्चाऽङ्कं, देवमनुष्योभयवृत्ताश्रितं, तथा सर्वेष्वपि अङ्केषु विदुषकसहितं तादृशमुपरूपकं त्रोटकम्। प्रत्यङ्क सविदूषकत्वादत्र शृङ्गारोऽङ्गी।

**सामान्यपरिचयः–** विक्रमोर्वशीयं रचनादृष्ट्या रूपकमिदं मालविकाग्निमित्राभिज्ञान-शाकुन्तलयोर्मध्यवर्ति। अत्र अप्सरसा उर्वश्या सह पुरूरवसः प्रेमलीला वर्णिताऽस्ति। लक्षणदृष्ट्येदं त्रोटकम्। अत्रापि पञ्चैवाङ्काः कथानकमिदं ऋग्वेदादौ पुराणेषु चोपवर्णितम्। पुरूरवस उर्वश्याश्च प्रणयः कविकल्पनया नवीनतयात्र प्रस्तुतम्। पुरूरवा हि विक्रमो विक्रम्य राक्षसोपद्रुतामुर्वशीं मोचयति। अन्योन्यविलोकने हि तयोश्चेतस्यनुराग उद्भवति। पुरूरवसः स्मृत्या भ्रष्टगतिरुर्वशी भरतेन भूतलस्पर्शाय शप्ता भवति पुत्रदर्शनेन शापान्तश्च निश्चीयते। पश्चाच्च शक्रप्रसादेन तयोराजीवनं मिलनं सुनिश्चितं भवति। त्रोटकमिदमन्वर्थसंज्ञम्।।

नाट्यशास्त्रस्य द्वाविंशतितमे अध्याये वर्णितानि नायकस्य नायिकायाश्च लक्षणानि तद्भेदांश्च अनुसृत्य विक्रमोर्वशीयत्रोटकस्य विवरणम् अत्र प्रस्तौमि। इदानीं नायकस्य नायिकायाश्च लक्षणविभागान् यथाशास्त्रं प्रदर्शयामि।

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्॥**[4]

आदिशब्दान्नायिकाप्रतिनायिकादयः।

तत्र **नायकः –त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता॥**[5]

तत्र आलम्बनोद्दीपनयोर्मध्ये नायकं लक्षयति यत् –दानशीलं, कुशलः, उच्चकुलप्रसूतः, सम्पत्तिसम्पन्नः, सौन्दर्यतारुण्योत्साहसम्पन्नः, दक्षः, अनुरागयुक्तः नेता। अन्यकृत -निन्दाद्यसहिष्णुता, नैपुण्यं, सद्वृत्तम्, चैतानि सन्ति यस्मिन् सः नायको भवति॥

अत्र विक्रमोर्वशीये नायकः धीरोदात्तः पुरुरुवसाः। धीरोदात्तलक्षणं यथा-

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**
**स्थेयान्निगुढमानो धीरोदात्तो दृढव्रतः कथितः॥**[6]

अविकत्थनः (आत्मश्लाघारहितः), क्षमाशीलः, अतिगाम्भीर्ययुक्तः, हर्षशोकादौ अनभिभूतः। स्थिरतरः, निगूढः (विनयेन आच्छादितः) मानः यस्य सः। स्वीकृतस्य विषयस्य निर्वाहकः। नाटके दक्षिणनायकरूपेण एषश्चित्रितो दृश्यते। तद्यथा- अनेकमहिलासमरागः (अनेकमहिलासु) द्वित्रिचतुः प्रभृतिषु नायिकासु समरागनायकः, **दक्षिणःकथितः।**[7]

विक्रमोर्वशीयेनाटकेऽस्मिन् राजा पुरूरवाः सर्वगुणसम्पन्नो धीरोदात्तो नायक अस्ति। सोमवंशे जातोऽयं महाबली, गम्भीर, अविकत्थनः (आत्मश्लाघारहितः), क्षमाशीलः, हर्षशोकादौ अनभिभूतः,स्थिरतरः, विनयान्वितश्च दृश्यते। अप्सरसामार्त्तस्वरं श्रुत्वा सः सत्त्वरम् तासां रक्षणार्थम् उद्युक्तः जातः। येन तस्य वीरत्वेन प्रभावितो भूत्वा देवेन्द्रोऽपि **'अस्माकं चायं सांयुगीनःसहायः'**इति अवदत्।।

एषो दक्षिणनायकः। यद्यपि सः उर्वश्याउपरि आसक्तः जातः तथापि राज्ञीम्- औशीनरीं प्रति अनुरागः तस्य चरित्रस्य महद्वैशिष्ट्यमस्ति। सः सहृदयः कमपि अप्रसन्नं न करोति।

पुरूरवा उर्वश्या उपरि आसक्त इति ज्ञात्वा यदा राज्ञी दुःखिता भवति तदा राजा प्रार्थनाद्वारेण तां प्रसादयति। तद्यथा-

**दातुमसहने प्रभवस्यन्यस्यै, कर्तुमेव वा दासम्।**
**नाहं पुनस्तथा त्वयि, यथा हि मां शङ्कसे भीरु॥**[8]
**(दक्षिणनायकः)**

अत्र उर्वशी प्रेमवशंवदस्यापि पुरूरवसः महाराज्ञीमौशीनरीं प्रति प्रेम प्रदर्शयति। सामान्यजनसदृशकामजन्यचञ्चलता अपि पुरूरवसि दृश्यते। पट्टमहिष्याः अवहेलनं कृत्वा उर्वशीं प्रति अनुरक्तस्य नाटकेऽस्मिन् मन्दाकिन्याः





पुलिनेषु गतां सिकतापर्वतकेलिभिः क्रीडन्तीं विद्याधरदारिकां उदयवतीं चिरं प्रेक्षते पुरूरवाः।।

प्रथमदर्शनेन एव राजा उर्वशीं प्रति आकृष्टो लक्ष्यते। तस्याः दर्शनमात्रञ्च प्राप्तुमधीरो भवति। प्रस्थितायां तस्यां लताकण्टकेन यदा तस्याः मौक्तिकमाला लग्ना भवति तदा सा विलम्बयति। तत्र लतां प्रशंसयतः राज्ञः समुत्कण्ठा नूनमवलोकनीया। यदुक्तम्-

**प्रियमाचरितं लते त्वया मे गमनेऽस्या क्षणविघ्नमाचरन्त्या।**
**यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मया हि दृष्टा॥**[9]

स्वर्गसुखमविस्मरणीयमपि यदा उर्वशी स्वर्गात् मर्त्यलोकं प्रति आयाति तदा राजा उर्वश्याः प्रीत्या तस्याः दासत्वमपि स्वीकरोति। उक्तञ्च-

**अनिर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते।**
**अनन्यनारीसामान्यः दासस्त्वस्या पुरूरवा ॥**[10]

**अनन्तरं कुमारवने उर्वशी लतारूपेण परिणमते तदा पुरूरवा तस्या विरहेण अधीरो भवति । तन्मनसि नैकाः शङ्काः जायन्ते । सः प्रलापं च कुरुते।** यथा-

**नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः**
**सुरधनुरिदं दूराकृष्टं न नामशरासनम्।**
**अयमपि पटुर्धारासारो न बाणपरम्परा,**
**कनक-निकषस्निग्धा विद्युत्प्रिया मम नोर्वशी॥**[11]

अदृष्टायाः उर्वश्याः स तद्वनगतान् हंसादीन् प्रेक्ष्य स्वप्रियाविषयं पृच्छतीति लक्षते। यदुक्तं तेन-

**बर्हिण त्वामित्यभ्यर्थये आचक्ष्व मे तत्**
**अत्र वने भ्रमता यदि त्वया दृष्टा सा मम कान्ता।**
**निशामय मृगाङ्कसदृशवदना हंसगतिः**
**अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया॥**[12]

**बर्हिण।** त्वाम् इति अभ्यर्थये, अत्र वने भ्रमता त्वया यदि सा मम कान्ता **दृष्टा**तन्निशामय, मया मृगाङ्कसदृशवदना, हंसगतिः तव आख्यातम्, अनेन **चिह्नेन(त्वं) ज्ञास्यसि॥**

**मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्**
**घनरुचिरकलापो निःसपत्नोऽद्य जातः।**
**रतिविगलितबन्धे केशहस्ते सुकेश्याः**
**रति-कुसुम-सनाथे किं करोत्येष बर्ही॥** [13]

मत्प्रियायाः विनाशात्(अस्य) मृदु पवन विभिन्नः घनरुचिरकलापः अद्यनिः सपत्नः जातः। सुकेश्याः कुसुमसनाथे रति विगलित बन्धेकेशहस्ते सति एषः बर्हीं किं करोति॥

उर्वशीमदृष्ट्वा अन्ते सः बहुकातरो दृश्यते। यदुक्तं तत्र-

**त्वयि निबद्धरतेः प्रियवादिनः प्रणय-भङ्ग-पराङ्मुखचेतसः।**
**कमलराधलवंममपश्यसि त्यजसि मानिनि दासजनं यतः॥** [14]

एवमेव उर्वशीं प्रति प्रेम्णः चरमपराकाष्ठा तेन प्रदर्शिता।

यदा उर्वशी **"यदैष मम प्रियसखी राजर्षिस्त्वयि समुत्पन्नस्यवंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोऽपि समीपमागन्तव्यमिति। ततो मया महाराज वियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपदे आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या निर्यातितो मे दीर्घायुः। तदेतावान्मे महाराजेन संवासः"**[15] इत्यादीन्द्रशापवृत्तान्तमवदत् तदा राजा अपि आकुलो भवति। उक्तञ्च-

**आश्वासितस्य मम नाम सुतोपलब्ध्या**
**सद्यस्त्वया सह कृशोदरि विप्रयोगः।**
**व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या**
**वृक्षस्य वैद्युत इवाग्निरुपास्थितोऽयम्॥** [16]

एवमेव पुरुरवा नाटके धीरोदात्तनायकरूपेण श्रृङ्गाररसस्य पोषको भवति।।

<u>नायिका</u> -

नाटकेऽत्र उर्वशी नायिका। अनुपम रूपसौन्दर्यवती सा श्रृङ्गाररसस्य विषयालम्बनरूपात्र प्रसिद्धा। नाट्यशास्त्रे भरतमुनिना नायिकायाः मुख्यतया त्रयो भेदाः उक्ताः **आभ्यान्तराः, बाह्याभ्यन्तरा, बाह्या, चेति।**





**ता एव स्वकीया , परकीया, सामान्या चेति शास्त्रकाराः** निर्दिशन्ति। उक्तमेतत्साहित्यदर्पणे – **अथ नायिकात्रिभेदास्वाऽन्यासाधारणीस्त्रीति॥** [17]

तत्र स्वकीया नायिका शीलार्जवादिगुणैः युक्ता, पतिप्रेमपरायणा, व्यवहारनिपुणा, गृहकार्यदक्षा, विवाहिता पतिव्रता नारी स्वकीया नायिका। **एषा स्वकीया नायिका मुग्धा मध्या प्रगल्भेति त्रिधा।** यदुक्तम्-

**"सापि कथिता त्रिभेदा मुग्धामध्याप्रगल्भेति॥"** इति[18]

एषा नायिका अङ्कुरितयौवना, लज्जावती, सूरतक्रीडायां भीता, माने मृदुः च भवति। इयमुर्वशी स्वीया मुग्धा नायिका। स्वसौन्दर्यसारश्रिया सा राजानं दर्शनमात्रमेव विमुग्धं करोति। राक्षसात् उद्धृत्य प्रकृतिस्थामुर्वशीं निर्वर्ण्यात्मगतं राजा तत्सौन्दर्यनिरूपणं कृत्वा वदति-

**अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः,**
**श्रृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।**
**वेदाभ्यास-जडः कथं नु विषय-व्यावृत्त-कौतूहलो,**
**निर्मातुं प्रभवेन्मनोहरमिदं रुपं पुराणो मुनिः॥** [19]

यद्यपि राज्ञे सा स्निह्यति तथापि लज्जाशीला मुग्धा सा तद्वक्तुं असमर्था भवति। स्वमुखेन राजानं आमन्त्रणाय च लज्जते। उक्तञ्च-

**"हला चित्रलेखे, उपकारिणमपि राजर्षिं न शक्नोमि आमन्त्रयितुम्। तत्त्वमेव मे मुखं भव॥"**[20]

एवमेव स्वमनोभावं प्रकाशयितुं एकावलीं वैजयन्तिकां लताविटपगतां करोतीति लक्ष्यते। येन तं राजानं प्रति अनुरागः दृश्यते। उक्तञ्च-**असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम्।**

एवमेव देवसभायां सुन्दरपुरुषरूपेण पुरुरवसं समर्थयित्वा स्वप्रेम्णः परिचयं सा प्रस्तौति। औशीनर्या आज्ञप्ता सा राज्ञा सह निश्शङ्कसङ्गता भवति। ब्रूते च-

**सखि। देव्या दत्तो महाराजः। अतोऽस्य प्रणयवतीव शरीरं सङ्गताऽस्मि। मा खलु मां पुरोभागिनीति समर्थय।**[21]

मानमयी सा राज्ञः गन्धर्वकन्यादर्शनेन समुद्वेजिता भवति। किमपि नोक्त्वा <u>राजानं विहाय कुमारवनं गच्छन्ती सा स्व मुग्धात्वं प्रकटयन्तीति दृश्यते।</u> **माने**

**च मृदुश्च – कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम्। प्रभुता रमणेषु योषितां न हि भाव-स्खलितान्यपेक्षते॥**[22] गतायां तस्यां राज्ञः अवस्था शोचनीया अभवदिति ज्ञात्वा सा मितभाषिणी सरलया गिरा राजानं स्थिरीकरोति। उक्तञ्च- **प्रसीदतु महाराजो यन्मया कोपवशं गतया एतदवस्थान्तरं प्रापितो महाराजः।**[23] उर्वशी शीलस्य एवं सदाचारस्य च मूर्तिमत् उदाहरणम् अस्ति। सा सपत्नी भूत्वापि महिषीम् औशीनरीं प्रति इन्द्राणीसदृशं आदरपूर्वकं व्यवहारं कृतवती। यदुक्तं तया- **"साधु, स्थाने इयमपि देवीशब्देनोच्चार्यते। न किमपि परिहीयते शचीतः ओजस्वितायाः।।**[24]

आयुष्कुमारस्य यौवराज्यभिषेककाले उर्वशी स्वपुत्राय "एहि वत्स। **ज्येष्ठमातरमभिवन्दस्व"।**[25] **इति** समादिश्य स्वव्यवहारपाटवञ्च प्रकाशयति। इत्थम्प्रकारेण तस्यां आदर्शं नार्योचिताः सर्वे गुणाः विद्यमानाः दृश्यन्ते इति कृत्वा सर्वलक्षणसम्पन्नेयं नायिका नाटके श्रृङ्गाररसं कामं पोषयतीति लक्ष्यते।।

**पादटिप्पण्यः**

१ . ६.३२नाट्यशास्त्रम्
२. ७.४तत्रैव
३.६/२७३साहित्यदर्पणः
४. ३/२९तत्रैव
५. ३/३१तत्रैव
६. ३/३२तत्रैव
७. ३/३५तत्रैव
८. ३/१४विक्रमोर्वशीयम्
९.१/१८तत्रैव
१०. ३/१८तत्रैव
११. ४/७तत्रैव
१२. ४/२०तत्रैव
१३. ४/२२तत्रैव
१४. ४/५५तत्रैव





१५. ५/२४८पृ. तत्रैव
१६. ५/१६तत्रैव
१७. ३/५६साहित्यदर्पणः
१८. तत्रैव
१९. १/१०विक्रमोर्वशीयम्
२०.१/३२पृ.तत्रैव
२१. ३/१३९तत्रैव
२२. ४/२६तत्रैव
२३. ४/२१२पृ.तत्रैव
२४. ३/१२६पृ.तत्रैव
२५. ५/२६१पृ. तत्रैव

**आधारग्रन्थाः**

**१.नाट्यशास्त्रम्** – 'प्रदीप हिन्दीव्याख्या- टिप्पणी' चौखम्भा पब्लिकेशन, नई **दिल्ली.**

**२.**Natyashastra of Bharatamuni- commentary of AbhinavaBharati, New Bhartiya book corporation

**३.साहित्यदर्पणः** –कृष्णदास संस्कृत सीरीज १, चौखम्भा कृष्णदास अकादमी **वाराणसी.**

**४.विक्रमोर्वशीयम्** 'सुधा' – संस्कृत- हिन्दीटीकाद्वयोपेतम् चौखम्भा सुरभारती **प्रकाशन वाराणसी.**

************

# अभिज्ञानशाकुन्तले नायको नायिका च

-श्री. जीतेन्द्रकुमारगुप्तः
शोधच्छात्रः, साहित्यविभागः,
क. जे. सोमैया सं.विद्यापीठम्,
विद्याविहारः, मुम्बई।

**नायकः -**

अभिज्ञानशाकुन्तले नाटके धीरोदात्तः दक्षिणनायकः दुष्यन्तः श्रृङ्गाररसस्य पोषकः। तल्लक्षणं यथा साहित्यदर्पणे-

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**
**स्थेयान्निगूढमानो धीरोदात्तः दृढव्रतः कथितः॥ ३/३२**

अयं हस्तिनापुरराजः पुरुवंशीयः नीतिनिपुणः प्रेमशीलः साधुजनवत्सलः प्रजारञ्जको दृश्यते। आखेटकप्रियोऽसौ मालिनीतीरवने मृगमनुधावन् प्रविशति। राजत्वधर्मरक्षकोऽसौ ऋषीणामाग्रहेण आखेटकान्निवृत्त्य आश्रमपदं प्रविशति तदा उद्यानपादपान् सिञ्चन्तीं शकुन्तलां च पश्यति। दर्शनमात्रेणैव सः शकुन्तलारूपलावण्यमुग्धो भवति। तस्याः अव्याजमनोहरं वपुः दृष्ट्वा राज्ञः मनसि भावान्तरं समुदेति वदति च-

**इदं किलाव्याजमनोहरं वपुः तपःक्लमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया समीलतां छेत्तुमृषिर्व्यवस्यति॥** इति। १/१८

यद्यपि शकुन्तलायां स आसक्तो दृश्यते तथापि एषः ब्राह्मणकन्यकया सह पाणिग्रहणस्यानौचित्यं प्रति जागरूकः भवति। एषा कण्वस्य असवर्णकुलसम्भवा भवेदिति अन्तःकरणवृत्त्या प्रथमं निश्चिनोति। यदुक्तं तेन-
**"अपि नाम कुलपतेरियमसवर्णकुलसम्भवा भवेत्। अथवा कृतं सन्देहेन।**

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥**
इति। १/२३





दुर्वाससः शापेन स्मृतिभ्रष्टः शकुन्तलां ज्ञातुमशक्तः परनारीग्रहणमनुचितमिति प्रमाणयन् तां परित्यजति। को वा अन्यः अपरूपां स्वयं चलितां लक्ष्मीं प्रत्यादिशति। किन्तु नीतिनिपुणः एषः तां विसर्जयति। उक्तञ्च-

**मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये।**
**दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः॥** ५/३२

**प्रजानुरञ्जकः-** एषः राजभोगे स्थित्वा अपि ऋषिसदृशमाचरतीति मुनयः प्रमाणयन्ति। यदुक्तम्-

**अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥** इति। (२/१५)

यदा शकुन्तलायाः स्मरणे असमर्थो भवति तदा पुरोहितं सोमरातमेव प्रमाणपुरुषरूपेण स्वीकृत्य ब्राह्मणानां प्रति तस्यादरं प्रकटयति।

क्षत्रियः एषः इन्द्रस्यापि मित्ररूपेण स्वर्गं गच्छति। दैत्यान् च हत्वा स्वर्गं निष्कण्टकं कुरुते।।

शकुन्तलायामस्य स्नेहः समधिको दरीदृश्यते। मिलने अप्राप्ते सः पुनः आश्रमपदं गन्तुमिच्छति । तत्र विरहपीडितां तथा मदनलेखसहितां शकुन्तलां वीक्ष्य अत्यन्तानुरक्तो भवति। स्वयं च तत्र सन्तप्तायाः शकुन्तलायाः प्रसादनोन्मुखः दृश्यते।

सा एव तस्य कुलप्रतिष्ठा इति स्वीकरोति तस्याश्च प्रसाधनाय यतते। उक्तञ्च-

**किं शीकरैः क्लमविमर्दिभिरार्द्रवातं**
**सञ्चालयामि नलिनीदलतालवृन्तम्।**
**अङ्के निधाय चरणावुत पद्मताम्रौ**
**संवाहयामि करभोरु। यथासुखं ते॥** ३/२५

पुनश्च यदा तां परित्यज्य हस्तिनापुरं गच्छति तदा स्वनामधेयमङ्गुलीयकं समर्पयति। धीवरात् मुद्रिकां प्राप्य परित्यक्तायाः

शकुन्तलायाः स्मृतिरुदेति सः विरहव्यग्रमनाः दृश्यते। अकार्यकारकत्वेन स्वीयं विलासं परित्यजति। वसन्तोत्सवश्च प्रतिषिद्धयति। पर्याकुलो शकुन्तलाचिन्तनेन एव दिनानि कथमपि नयति। उक्तञ्च-

**संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा।**

**कल्पिष्यमाणा महते फलाय वसुन्धरा काल इवोप्तबीजा॥** ६/२६

अन्ते च मारीचाश्रमे शकुन्तलामेकवेणीधरां वीक्ष्य स्वापराधस्वीकारपूर्वकं तां महिषीरूपेण गृह्णाति। मिलनसुखञ्चानुभवतीति। एवमेव धीरोदात्तः नायक एषः श्रृङ्गाररसस्य पुष्ट्ये समर्थः नेता ।

**नायिका -**

अभिज्ञानशाकुन्तले नायिका शकुन्तला। विना नायिकां संस्कृतसाहित्यमपूर्णम्। न केवलं कालिदासरचनासु अपि तु प्रायः सर्वेषु साहित्यिकव्यवहारेषु नायिका संपूर्णतां विधत्ते। अतः संस्कृतसाहित्ये नार्य्या महत्वपूर्णं स्थानमस्ति। वैदिकसाहित्ये लौकिकेऽपि नारी क्वचित् सहनशीला, क्वचित् मातृत्वगुणाढ्या, क्वचित् तपोमूर्तिः, क्वचित् भक्तिशीला, क्वचित् प्रेमप्रतिमूर्तिः, कूटनीतिज्ञा, मुखतया पतिव्रता, यथायोग्यं व्यवहारशीला, उत्तमा मार्गदर्शिका च वर्तते। एभिः गुणैरेव नारी पूजिता भवति। रामायणस्य सीता, कुमारसम्भवस्य पार्वती, महाभारतस्य कुन्ती, गान्धारी, द्रौपदी, श्रीमद्भागवतस्य यशोदा, देवकी राधा च यान्येतानि नारीपात्राणि प्रसिद्धानि। शकुन्तला एका एवैतासां निदर्शनम्। नाटकेऽस्मिन् सा स्वीया मुग्धा नायिका। आश्रमविलासिनी सेयं शकुन्तला कालिदासमानससुन्दरी अव्याजमनोहरवपुष्मती मेनकाविश्वमित्रयोः पुत्री कण्वपालिता अस्ति। प्रथमे अङ्के उद्यानपादपसेचनं कृतवती अवतीर्णा सा अरण्यागतराजर्षेः दुष्यन्तस्य नेत्रवशंवदा तं सौन्दर्यप्रवाहेण निमज्जयतीति दृश्यते।तस्या रूपलावण्यं न मनुष्यसम्भवमिति राजा चिन्तयति। उक्तञ्च-

**मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।**

**न प्रभातरलज्योतिरुदेत्रि वसुधातलात्॥** इति॥ १/२८





अभिज्ञानशाकुन्तलं मुख्यरूपेण प्रणयात्मकं नाटकं विद्यते, अस्मिन् स्वभावतः श्रृङ्गाररसस्याद्यन्तविकासस्य प्रधानता भवेत्। अभिज्ञानशाकुन्तले श्रृङ्गाररसस्य आलम्वन-विभावस्य रूपेऽप्रतिमलावण्यस्य नायकः नायिका च अस्ति। यथा नायिका-

**चित्रे निवेश्य परिकल्पितसत्त्वयोगा**

**रूपोच्चयेन मनसा विधिना कृता नु ?**

**स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे**

**धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥** इति। २/१०

अपि च-

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**

**रत्नाविद्धं रत्नं मधु नवमनास्वादितरसम्।**

**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**

**न जाने भोक्तारं कमिह समुपस्थास्यति विधः॥** इति। २/११

शकुन्तलायाः सौन्दर्यं नैसर्गिकम्; अधरे किसलयरागता, वाह्वोः कोमलविटपानु-रागता, शरीरे च लतावल्लालित्यं तस्याः नैसर्गिकं भूषणमेवासीत्। आश्रमे तस्याः पालनपोषणमभवत्। अतः शकुन्तलायां स्वाभाविकी सरलता, सुशीलता मुग्धता च विराजिताः॥ यदुक्तम्-

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।**

**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥** इति। १/२२

सा लज्जाशीला यदा दुष्यन्तः तस्याः प्रशंसां करोति तदा नम्रानना श्रृणोति । मधुरभाषिणी सा यदा अनसूया तथा प्रियम्वदा विवाहस्य वार्तां कुरुतः तदा कटूत्तरं न प्रददाति। एवमेव विनयान्विता नाटके सा स्वीया नायिका।।

तपोवने पालितत्वात् तस्याः प्रकृत्या सह सहजं प्रेम भवति। सा वृक्षैः वनस्पतिभिः मृगादिभिः सह ममत्वस्यानुभवं करोति। सा पादपेभ्यः, लताभ्यः, पशुभ्यः, पक्षिभ्यः स्निह्यति। आश्रमस्थेभ्यः वृक्षेभ्यः जलं प्रदाय अनन्तरं जलपानं करोति। सा प्रियमण्डना सत्यपि वृक्षाणां पादपानां पुष्पपत्रादिकं नैव स्वीकरोति। सा पतिव्रतास्ति । विवाहानन्तरं यदा सा पत्युः चिन्तने व्यस्ता

भवति तस्मिन् समये मुनिः दुर्वासाः तस्यै शापं ददाति। तस्मिन् शापविषयेऽपि तस्याः ज्ञानं न भवति पातिव्रत्यात्। राजा तस्याः परित्यागं करोति तथापि सा पतिव्रता तिष्ठति। सा मारीचस्याश्रमे तपस्विनीवत् स्थिता दृश्यते। यदुक्तं सप्तमे दुष्यन्तेन-

**वसने परिधूसरे दधाना नियमक्षाममुखी धृतैकवेणी।**
**अतिनिष्करुणस्य शुद्धशिला मम दीर्घं विरहव्रतं बिभर्त्ति॥** ७/३१

नायकनायिकयोरालम्बने त्रिविधः श्रृङ्गारः निष्पन्नोऽभूत् पूर्वरागः सम्भोगः करुणविप्रलम्भश्च, अस्याः पूर्वरागः स्थिरः अतिशोभनशीलः, सम्भोगः, स्वल्पकालिकः शकुन्तला यदा मारीचाश्रमे गच्छति तदा करुणविप्रलम्भश्रृङ्गारोऽस्ति शकुन्तलायाः कन्तियुतिः नाटकारम्भे कालिदासः शकुन्तलां कन्यानायिकारूपेण प्रस्तौति –

**अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम्।**
**विनयवारितवृत्तिरतस्तया न विवृतो मदने न च संवृतः॥** इति। १/१२

शकुन्तलायाः पालनं तपस्विनां मध्ये अभवत्। अतः तस्या जीवनं तापसमिव अभवत्। सा वल्कलं वसाना वर्तते। सा श्रृङ्गारादिकं न जानाति। साहित्यशास्त्रानुसारेण सा स्वीया मुग्धा च नायिका अस्ति। प्रकृत्या शकुन्तलाया मधुरसम्बन्ध अस्ति। यदा शकुन्तला पतिगृहं गच्छति। तदा पुत्रवत् परिपोषितो मृगः शकुन्तलाया भर्तृगृहगमनपथं न परित्यजति उक्तञ्च शाकुन्तले- **सोऽयं स पुत्रकृतकः पदवीं मृगस्ते।।** इति।

*************

## सन्दर्भग्रन्थसूची

१.नाट्यशास्त्रम्, भरतमुनिविरचितम्, परिमल पब्लिकेशन, दिल्ली, प्रथमसंस्करणम् १९९८

२.साहित्यदर्पणः विश्वनाथविरचितम्, काशीग्रन्थमाला १४५, चौखम्बासंस्कृतसंस्थान, वाराणसी, पुनर्मुद्रणम्- २०११।

३.निबन्धशतकम्, डा. कपिलदेवद्विवेदी, विश्वविद्यालयप्रकाशनम्, वाराणसी, पञ्चदशासंस्करणम् २०१३।





४.ध्वन्यालोकः, आनन्दवर्धनविरचितम्, आचार्यचण्डिकाप्रसादशुक्लसम्पादितः, विश्वविद्यालयप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् १९८१

५.काव्यप्रकाशः मम्मटविरचितम्, नागेश्वरी टीकायुक्तः, चौखम्बासंस्कृतसंस्थान, वाराणसी, अष्टमसंस्करणम्, १९९४।

६.काव्यादर्शः, दण्डीविरचितः, श्रीशिवनारायणशास्त्री, परिमल पब्लिकेशन, दिल्ली।

७.अग्निपुराणम्, गीताप्रेस गोरखपुर, प्रथमसंस्करणम्, २००९।

८.काव्यालङ्कारः, श्रीभामहाचार्येणविरचितम्, बिहाराष्ट्रभाषापरिषद्, पटना-१९६२।

९.अमरकोशः, अमरसिंहविरचितम्।

************

# दूतघटोत्कचे नायकः

-श्री. योगेन्द्रकुमारः
शोधच्छात्रः, साहित्यविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
क. जे. सोमैया संस्कृतविद्यापीठम्।

**प्रस्तावना-** दूतघटोत्कचं महाकविना भासेन रचितमेकाङ्करूपकम्। रूपकमिदं लक्षणदृष्ट्या **"व्यायोगः"** इति वक्तुं शक्यते। व्यायोग इवास्य इतिवृत्तं प्रसिद्धमस्ति। महाभारतीयं कथावस्तु उपजीव्य रूपकमिदं प्रवर्त्तितमास्ते। अस्य च नायकः धीरोद्धतः घटोत्कचः। गर्भविमर्शाख्यसन्धिरहितं एकदिवसीयचरितैर्निबद्धमिदं वीररसप्रधानम्। तथोक्तम्[1]-

**ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः,**
**हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः।।**
**एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।**
**कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः॥**
**राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।**
**हास्यश्रृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः॥**

यद्यपीदमुत्सृष्टिकाङ्क इव प्रतीयते तथापि युद्धसमये धीरोद्धतस्य घटोत्कचस्य दौत्यप्रसङ्गे उत्साहः तत्र च शोकक्रोधयोरङ्गत्वं वीररसस्य प्राधान्यं प्रत्याययति। नायकप्रधानमिदं रूपकम्।।

**दूतघटोत्कचस्य सङ्क्षिप्तकथासारः।**

नान्दीपाठाद् अनन्तरं सूत्रधारस्य प्रवेशः भवति। स किञ्चित् शब्दमिव श्रृणोति येन सः अभिमन्युवधस्य अनुमानं करोति। भटः अभिमन्युसम्वन्धिन्या वीरतायाः प्रशंसां करोति। एषः भटः अभिमन्युवधप्रवृत्तिं कथयति, यामाकर्ण्य गान्धारी शङ्किता भवति, एवं भविष्यत्कुलविग्रहस्य विषये धृतराष्ट्रं प्रति प्रश्नं करोति। धृतराष्ट्रः पुत्रशोकेन सन्तप्तायार्जुनाय किमपि दुष्करं न आलपति। विजयवाचिकं गृहीत्वा दुर्योधन-शकुनि-दुश्शासनाः आगच्छन्ति, ते धृतराष्ट्रं





प्रणमन्ति, किन्तु धृतराष्ट्रः तेभ्यः आशीर्वादं न ददाति। धृतराष्ट्रः कथयति- अहं सर्वेषामायुषि शङ्कितोऽस्मि। अभिमन्युः केवलपाण्डवान् वयस्याङ्कुरः नासीद् अपि तु कौरवकुलस्याप्यासीत्। किन्तु, पुत्रशोकेन सन्तप्तः अर्जुनः अवश्यमेव कौरवानां विनाशं करिष्यति। दुर्योधनः पृच्छति यत्- अर्जुनः? कोऽयम् अर्जुनः? धृतराष्ट्रः अर्जुनस्य प्रशंसां कथयति-अर्जुनस्य वीरतायाः विषये अग्नीन्द्रयक्षाः जानन्ति। समयेऽस्मिन्नेव उल्कापातः भूकम्पश्च भवति। तदनु सर्वे जानन्ति यदिदं सर्वमर्जुनस्य महाप्रतिज्ञायाः प्रभावोऽस्ति। दुर्योधनः यदा जानाति यत् प्रतिज्ञापूर्त्यभावे अर्जुनः स्वयेम अग्नौ भस्मीभविष्यति। श्रीकृष्णस्य संदेशं नीत्वा दूतरूपेण घटोत्कचः आयाति, घटोत्कचः क्रुध्यति किन्तु धृतराष्ट्रस्य आश्वासनेन स सुस्थिरो भवति। अन्ततो गत्वा घटोत्कचः पृच्छति दुर्योधनः उत्तरयति- यत् त्वया वक्तव्यं कृष्णम्प्रति तस्योत्तरं युद्धभूमौ दास्ये। श्रीकृष्णस्य चरमं संदेशं घटोत्कचस्तु प्रतिषिद्धमपि श्रावयति। एवं नाटकसमाप्तिः सञ्जायते।।

**नाटके रसः-**

नाटके **अङ्गी रसः वीरः** विद्यते। नायकः वीररसं प्रतिपादयति। नाटकस्यास्य अङ्गभूतरसः करुणः रौद्रश्च वर्त्तेते। नाटके करुणरसस्यापि आविर्भावः भवति। करुणरसः यथा[2]-

**अद्याभिमन्युनिधनाज्जनितप्रकोपः सामर्षकृष्णधृतरश्मिगुणप्रतोदः।**
**पार्थः करिष्यति तदुग्रधनुः सहायः शान्तिं गमिष्यति विनाशमवाप्य लोकः॥**

अभुमन्युवधादनन्तरं यदा गान्धारी सूचनामिमां श्रुत्वा क्रन्दति। तथा च यदा दुर्योधनस्य भगिनी दुश्शला अभिमन्योः वधविषये श्रुत्वा क्रन्दनं करोति। यथा[3]-

**जेण दाणिं बहूए उत्तराए वेधव्वं दाइदं, तेण अत्तणो जुवदिजणस्स वेधव्यमादिट्ठम्**
(प्राकृतम्)-

**येनेदानीं वध्वै उत्तरायै वैधव्यं दत्तम, तेनात्मनो युवतिजनाय वैधव्यमादिष्टम्[4]।**

अत्र रौद्रस्य दर्शनं भवति। स्वपौत्रस्य निधनं ज्ञात्वा क्रुध्यति। तथोक्तम्[5]-

**केनाभिमन्युर्निहतः कस्य जीवितमप्रियम्।**
**पञ्चानां पाण्डवाग्नीनामात्मा केनेन्धनीकृतः॥**

**नायकः –**

**तत्र नायकलक्षणं यथा साहित्यदर्पणे[6]-**

**"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**

**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता॥"** इति॥

अर्थात् तत्त्र आलम्बनोद्दीपनोयोर्मध्ये नायकं लक्षयति- त्यागी इति, त्यागी= दानशीलः, कृती= कुशलः, कुलीनः= उच्चकुलप्रसूतः, सुश्रीकः= सम्पत्तिसम्पन्नः, रूपयौवनोत्साही= सौन्दर्यतारुण्योत्साहसम्पन्नः, दक्षः= क्षिप्रकारी, अनुरक्तलोकः= अनुरक्ताः (अनुरागयुक्ताः), लोकाः= जनाः, यस्मिन्= सः, तेजोवैदग्ध्यशीलवान्= तेजः= अन्यकृतानिन्दाद्यसहिष्णुता, वैदग्ध्यम्= नैपुण्यम्, शीलम्= सद्वृत्तम्, तानि सन्ति यस्मिन् सः, एतादृग्विशेषणसम्पन्नौ जनः, नेता= नायकः भवति। घटोत्कचनायके एतेषां गुणानां समन्वयः?

<u>**नायकस्य भेदाः-**</u>

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**

**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः॥** इति[7]॥

नायकभेदानाह- धीरोदात्त इति। धीरः (धैर्ययुक्तः) सन् उदात्तः, श्रेष्ठः), धीरोदात्तः= धीरः सन् उद्धतः(अविनीतः), तथा धीरललितः= धीरः सन् ललितः (कोमलस्वभावः), धीरप्रशान्तः= धीरश्चाऽसौ प्रशान्तः (शान्तियुक्तः), इति चतुर्भेदः= भेदचतुष्टययुक्तो नायकः।

<u>**अथ धीरोद्धतलक्षणं यथा-**</u>

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।**

**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥** इति[9]।

धीरोद्धतं लक्षयति- मायापरः= छलपरः, प्रचण्डः= अत्यन्तकोपनः, चपलः= चञ्चलः, अहङ्कारदर्पभूयिष्ठः=अभिमानशौर्यवीर्याद्यतिशययुक्तः, आत्मश्लाघानिरतः=स्वप्रशंसनतत्परः, नायकः धीरैः= विद्वद्भिः, धीरोद्धतः, कथितः= अभिहितः। यथा- भीमसेनादिः।

दौत्यमत्र नायकस्य विवक्षितमिति कृत्वा प्रसङ्गप्राप्तदूतानां विभागगर्भलक्षणं यथा[10]-





**"निसृष्टार्थो मितार्थश्च तथा संदेशहारकः।**

**कार्यप्रेष्यास्त्रिधा दूतो दूत्यश्चापि तथाविधाः॥"** इति।

दूतानां विभागगर्भं लक्षणं प्रतिपादयति- दूतस्य परिभाषा तथा नाटकम्- निसृष्टाऽर्थ इति, कार्यप्रेष्यत्वं दूतत्वमिति दूतलक्षणम्, ते च दूताः- निसृष्टार्थो मिताऽर्थः संदेशहारकश्चेति त्रिधा= त्रिप्रकाराः। दूत्यश्चाऽपि तथाविधाः= तादृशः, निसृष्टाऽर्थाः मिताऽर्थाः संदेशहारिकाश्चेति त्रिप्रकाराः।

घटोत्कचे धीरोद्धतः इति नायकत्वं वर्त्तते, यतो हि[11]-

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।**

**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥** इति।

धीरोद्धतं लक्षयति- मायापरः = छलपरः, प्रचण्डः = अत्यन्तकोपनः, चपलः = चञ्चलः, अहङ्कारदर्पभूयिष्ठः = अभिमानशौर्यवीर्याद्यतिशययुक्तः, आत्मश्लाघानिरतः = स्वप्रशंसनतत्परः, नायकः धीरैः= विद्वद्भिः, धीरोद्धतः, कथितः= अभिहितः। यथा- भीमसेनादिः।

**घटोत्कचः**- सभायां घटोत्कचस्य प्रवेशानन्तरं तेन स्वतः स्वपरिचयः विधीयते। घटोत्कचः स्वोद्देश्यं प्रदर्शयति- सुभद्रायाः पुत्रस्य वधात् प्रेरितोऽहं कृष्णस्यादेशं मत्वा पापहृदयं शत्रुं द्रष्टुम् इच्छया तथैव गच्छामि, यथा अङ्कुशभयेन भयभीतः गजेन्द्रः ग्रासार्थं गच्छति। तेनोक्तम्[12]-

**प्रयामि सौभद्रविनाशचोदितः विद्क्षुरद्यारिमनार्यचेतसम्।**

**विचिन्त्यर्यश्चक्रधरस्य शासनं यथा गजेन्द्रोऽङ्कुशशङ्कितो बलिम्॥** इति।

अत्र नायकस्य विनम्रता स्पष्टयति। यदा दुश्शासनेन श्रीकृष्णस्य अवमानना क्रियते, तदा घटोत्कचेन श्रीकृष्णस्य प्रशंसा क्रियते। येन श्रीकृष्णः कारागारात् मुक्तः जायते, भीष्मस्य करकमलैः येन राज्ञां समक्षे अर्घ्यदानं स्वीकृतम्, लक्ष्मी स्वयं यस्मिन्ननुरक्ता, तथा तस्यः हृदयमेव यस्य श्रीकृष्णस्य शयनगृहमस्ति, स वन्दनीय चक्रपाणिराजानामपि राजा तुभ्यं कथं राजा नास्ति? अत्र नायकस्य विनम्रता प्रभूतं दृश्यते। तथोक्तम्[13]-

**मुक्ता येन यदा पुरा नृपतयः प्रभ्रष्टमानोच्छ्रया**

**येनार्घ्यं नृपमण्डलस्य मिषतो भीष्माग्रहस्ताद्धृतम्।**

**श्रीर्यस्याभिरता नियोगसुमुखी श्रीवक्षशय्यागृहे**
**श्लाघ्यः पार्थिवपार्थिवस्तव कथं राजा न चक्रायुधः॥** इति।

घटोत्कचः यदा शकुनिं शब्दैः ताडयति, तदैव दुर्योधनः घटोत्कचं कथयति यत् भवान् साम्प्रतं दूतनियमानुल्लङ्घयति, तदा तत्र घटोत्कचस्य आत्मश्लाघागुणः दृश्यते, तथा स दुर्योधनादपेक्षया स्वयम् अधिकदयावान् स्पष्टयति। श्लोकेऽस्मिन् घटोत्कचः दुर्योधनं कथयति यत् राक्षसेभ्योऽपि भवन्त एव क्रूरतराः सन्ति। निशाचराः लाक्षागृहे सुप्तान् भ्रातृन् न दाहयन्ति, निशाचराः तथा स्वभ्रातुः पत्नीं न स्पृशन्ति यथा भवन्तः, निशाचराः सङ्ग्रामे पुत्रहननं नहि ध्यानं कुर्वन्ति, किन्तु भवद्भिः कृतम्, यद्यपि तेषां भीषणविग्रहाः उग्राचाराः सन्तोऽपि किन्तु घृणा न वर्जिता तैरिति शेषः, ते निशाचराः अपि दयालवः, भवन्तस्तु निर्दयाः अतस्तेभ्योऽप्युग्रतयाः इति। अत्र निसृष्टार्थनायकस्य दयालुतायाः आत्मश्लाघा-निरतायाः प्रमाणं प्राप्यते।-

**न तु जतुगृहे सुप्तान् भ्रातृन् दहन्ति निशाचराः**
**शिरसि न तथा भ्रातुः पत्नीं स्पृशन्ति निशाचराः।**
**न च सुतवधं सङ्ख्ये कर्तुं स्मरन्ति निशाचराः**
**विकृतवपुषोऽप्युग्राचारा घृणा न तु वर्जिता॥** इति।

अत्र श्लोकेऽस्मिन् घटोत्कचस्य अहङ्कारदर्पभूयिष्ठः गुणं प्रमाणीयते। तेन सक्रोधम् उक्तम्- किं 'दूतः' इत्युक्त्वा वारंवारं मे निन्दयन्ति। इत्थं नास्ति, साम्प्रतमहं दूतो नास्मि। श्लोकेऽस्मिन् घटोत्कचः क्रोधमवलम्बते। दूतकार्यं समाप्तम्, अहं मौर्वीभङ्गात् दुर्बलः अभिमन्युः नास्मि, अहमत्र उपस्थितोऽस्मि, अधुना सर्वे सम्मिल्य मयि प्रहरन्तु। अत्र घटोत्कचस्य रौद्राविर्भावः दरीदृश्यते। तथोक्तम्-

**अलं वो व्यवसायेन प्रहरध्वं समाहताः।**
**ज्याच्छेदाद् दुर्बलो नाहमभिमन्युरिह स्थितः॥** इति।

नाटकान्ते घटोत्कचेन श्रीकृष्णस्य सन्देशमुक्त्वा स्वदौत्यकर्म क्रियते। घटोत्कचः श्रीकृष्णस्य अन्तिमसंदेशं कथयति, तथा भरतवाक्येन रूपकं समाप्तिमेति। यथा[14] -





**धर्मं समाचार कुरु स्वजनव्यपेक्षां यत्काङ्क्षितं मनसि सर्वमिहानुतिष्ठ।**
**जात्योपदेश इव पाण्डवरूपधारी सूर्यांशुभिः सममुपैष्यति वः कृतान्तः॥** इति॥

<u>उपसंहारः-</u> अत्र "रूपकेषु नायिकस्य नायिकायाश्च समीक्षणम्" इत्यमुं विषयमवलम्ब्य "दूतघटोत्कचे नायकस्य समीक्षणम्" विषयोपरि स्वविचारान् प्रकटितवान्। रूपकेऽस्मिन् नायिका नास्ति। अतः नायके विचारो विहितः। महाकविभासस्य दूतघटोत्कचेऽस्मिन् रूपके नायकः निसृष्टार्थो धीरोद्धतः उत्तमकोटौ वर्त्तते। यतो हि नायके घटोत्कचे ते सर्वे गुणाः दरीदृश्यन्ते ये नायके भवेयुः।

**पादटिप्पण्यः**

1. साहित्यदर्पणम्, प्रकाशकः- चौखम्वा कृष्णदास अकादमी, वाराणसी, व्याख्याकारः- आचार्य-शेषराजशर्मा रेग्मी, संस्करणम्- त्रयोदश वि, स, 2067, सन् 2010।, श्लोक-231-32-33।
2. दूतघटोत्कचे, पृष्ठसङ्ख्या-6
3. दूतघटोत्कचे, पृष्ठसङ्ख्या-6,7
4. दूतघटोत्कचे, पृष्ठसङ्ख्या-7
5. साहित्यदर्पणम्, प्रकाशकः- चौखम्वा कृष्णदास अकादमी, वाराणसी, व्याख्याकारः- आचार्य शेषराजशर्मा रेग्मी, संस्करणम्- त्रयोदश वि स 2067, सन् 2010, पृष्ठसङ्ख्या-114
6. तत्रैव, तृतीय परिच्छेदः, पृष्ठसङ्ख्या-114
7. तत्रैव, पृष्ठसङ्ख्या- 115
8. तत्रैव, पृष्ठसङ्ख्या-115
9. तत्रैव, पृष्ठसङ्ख्या-116
10. दूतघटोत्कचे, श्लोकसङ्ख्या-33
11. दूतघटोत्कचे, श्लोकसङ्ख्या-41
12. दूतघटोत्कचे, श्लोकसङ्ख्या-47
13. दूतघटोत्कचे, श्लोकसङ्ख्या-49
14. दूतघटोत्कचे, -श्लोकसङ्ख्या-52

## सन्दर्भग्रन्थसूची

१.साहित्यदर्पणः, प्रकाशकः- चौखम्बा कृष्णदास अकादमी, वाराणसी, व्याख्याकारः- आचार्य शेषराजशर्मा रेग्मी, संस्करणम्- त्रयोदश वि. स. 2067, सन् 2010

२.भासनाटकचक्रम्, व्याख्याकारः-अचार्य बलदेव उपाध्यायः, प्रकाशकः- चौखम्भा विद्याभवन,वाराणसी, प्रथमसंस्करणम्, 2002।

३.नाट्यशास्त्रम्, आचार्यभरतमुनिविरचितः, परिमल पब्लिकेशन दिल्ली, प्रथमसंस्करणम्, 1998।

४.काव्यप्रकाशः, श्रीमम्मटभट्टविरचितः, नागेश्वरी टीकायुक्तः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, अष्टमसंस्करणम्, 1995।

५.दशरूपकम्, धनञ्जयः, धनिकाक्रुतावलोकसहितम्, चौखम्बा विद्याभवनम्, वाराणसी, प्रथमसंस्करणम्, 1967।

६.ध्वन्यालोकः, आचार्यचण्डिकाप्रसादशुक्लसम्पादितः,विश्वविद्यालयप्रकाशनम्, वाराणसी, प्रथमसंस्करणम्, 1981।

७.साहित्यदर्पणः, विश्वनाथविरचितम्, काशीसंस्कृतग्रन्थमाला 145, चौखम्बासंस्कृतसंस्थान, वाराणसी, पुनर्मुद्रणम्-2011।

८.काव्यालङ्कारः- श्रीभामहाचार्येण विरचितः, काशीसंस्कृतग्रन्थमाला ६१, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, तृतीयसंस्करणम्- २००२.

९.साहित्यदर्पणः- विश्वनाथविरचितम्, चौखम्बासंस्कृतसंस्थानम्, वाराणसी- २०११।

**************





## कर्णभारे नायकः

-श्रीमती स्मिताकुमारी
अनुसन्धात्री,
क.जे.सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः, मुम्बई।

रूपकमिदं कर्णभारं कलापक्षदृष्ट्या व्यायोगसदृशं वर्तते। महाभारतीयं कथावस्तु उपजीव्य नाटकमिदं प्रवर्तितमास्ते। नाटकेऽस्मिन् कर्णस्य दानवीरता सुष्ठु प्रदर्शिता दृश्यते। सोऽत्र स्वकीयमुत्तरदायित्वं सोत्साहं निर्वहणार्थमुद्यतोऽस्ति। अन्यतश्च तत्समक्षमनेका बाधाः नैराश्यञ्च समुपतिष्ठन्ते। तथापि एषस्त्यागमूर्त्तिः बन्धुप्रियः कुरुणां प्रियं कर्त्तुं समरभूमिमवतरति। एषः कुन्तीपुत्रः राधया पालितः अङ्गाधिपः कौरवसेनापतिः। अत्यन्त अभिमानी सः नाटके स्वाभिमानं प्रकटयतीति दृश्यते। सोऽयमस्य नाटकस्य नायकः धीरोद्धतः कर्णः। धीरोद्धतनायकस्य लक्षणं यथा-

"मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः"।।१।।

रूपकारम्भे भटः सेनापतिं कर्णं दूरतो निवर्णयन् तत्स्वरूपं निरूपयति। उक्तञ्च-

"अत्युग्रदीप्तिविशदः समरेऽग्रगण्यः
शौर्ये च सम्प्रति सशोकमुपैति धीमान्।
प्राप्ते निदाघसमये घनराशिरुद्धः
सूर्यः स्वभावरुचिमानिव भाति कर्णः"।।२।।

महाभिमानी सः प्रवेशमात्रमेव रङ्गे कौरवाभिलषितमर्जुनवधं कर्त्तुमुत्सहते। वदति च-

"मा तावन्मम शरमार्गलक्ष्यभूता
सम्प्राप्ताः क्षितिपतयः सजीवशेषाः।
कर्त्तव्यं रणशिरसि प्रियं कुरूणां

**द्रष्टव्यो यदि स भवेद्धनञ्जयो मे"।।३।।**

युद्धप्रियः सः क्रुद्धान्तकविक्रमी कर्णः महाभारतयुद्धं प्राप्य सुखितो भवति। उक्तञ्च-

**"अयं स कालः क्रमलब्धशोभनो गुणप्रकर्षो दिवसोऽयमागतः"**।।४।। इति।

तथापि गुरौ कृतापराधः अस्त्रनिरर्थप्रस्तावं स्मारं स्मारं दैन्यमनुभवति। तथापि कर्णस्य उत्साहः सम्पूर्णनाटके स्थायित्वं लभते। अविषादितः कर्णः युद्धे विजयो वा पराजयो वा तत्र भेदमविचार्य वीरत्ववृत्त्या भवितव्यमिति शल्याय निवेदयति। युद्धे विफलता न लभ्यते इति च विज्ञापयति। कश्चित् वीरश्चेत् हतो भवति तर्हि स स्वर्गं प्राप्नोति अथवा जित्वा यशो लभते,अतः संसारे द्व एव श्लाघ्ये वीरस्य। यदुक्तं तेन-

**"हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः।**
**उभे बहुमते लोके नास्ति निष्फलता रणे"**।।५।। इति।

वीरत्वात् सः शत्रुपाण्डवान् निहन्तुं यतते प्रतिज्ञां च करोति। तद्यथा-

**"समरमुखमसह्यं पाण्डवानां प्रविश्य**
**प्रथितगुणगणाढ्यं धर्मराजं च बद्ध्वा।**
**मम शरवरवेगैरर्जुनं पातयित्वा**
**वनमिव हतसिंहं सुप्रवेशं करोमि"**।।६।। इति।

न केवलं कर्णः युद्धवीरत्वेन अपि तु दानवीरत्वेनास्य नाटके आविर्भावः दृश्यते। कवचकुण्डलयोः युद्धसमये प्रदानमत्यन्तं प्राणहरन्तथापि सः न बिभेति। साग्रहं तौ समर्पितुमिच्छति। द्विजरूपमिन्द्रं याचकरूपेण प्राप्य धन्यं मनुते। उक्तञ्च-

**"यातः कृताग्रगणनामहमद्य लोके**
**राजेन्द्र मौलिमणिरञ्जितपातपद्मः।**
**विप्रेन्द्रपादरजसा तु पवित्रमौलिः**
**कर्णौ भवन्तमहमेष नमस्करोमि"**।।८।। इति।

नीतिमान् सः धर्मः एव प्रकृष्टं साध्यमित्युपदिशति (८) याचकं ब्राह्मणं किमपि दातुं च प्रतिजानीते। तेन कवचकुण्डले अप्रार्थिते अपि सः स्वयं





दातुमिच्छति। अत्र कर्णस्य उज्ज्वलचरित्रस्य दानशीलतायाश्च प्रभावशालि निरुपणं विहितमस्ति। तद्यथा-

**"अङ्गै सहैव जनितं मम देहरक्षा**
**देवासुरैरपि न भेद्यमिदं सहस्त्रैः।**
**देयं तथापि कवचं सह कुण्डलाभ्यां**
**प्रीत्या मया भगवते रुचितं यदि स्यात्"**।।९।। इति।

कवचकुण्डले प्रदाय सः निश्चिन्तो दृश्यते। तस्य मनसि ग्लानिर्नावलोक्यते। यदा "सः शक्रेण वञ्चित"इति शल्यराजः निवेदयति सः कृतकृत्यो वदति-

**"अनेकयज्ञाहुतितर्पितो द्विजैः**
**किरीटवान् दानवसङ्घमर्दनः।**
**सुरद्विपस्फालनकर्कशाङ्गुलि-**
**र्मया कृतार्थः खलु पाकशासनः"**।।१०।। इति।

एवमेव नाटके धीरोद्धतोऽपि दानवीरः कर्णः मुख्यरसस्य नेतृरूपेण भासकविना परिकल्पितो वर्त्तते।

**पादटिप्पण्यः**

१.साहित्यदर्पणः, तृतीयः परिच्छेदः-३३ ;
२.कर्णभारम्-४ ; ३.कर्णभारम्-५
४.कर्णभारम्-८ ; ५.कर्णभारम्-१२
६.कर्णभारम्-१४ ; ७.कर्णभारम्-१६
८.धर्मो हि यत्नैः पुरुषेण साध्यौ भुजङ्गजिह्वाचपलानृपश्रियः।
तस्मात्प्रजापालनमात्रबुद्या हतेषु देहेषु गुणा धरन्ते।। (कर्णभारम्-२३)
९.कर्णभारम्-२१ ; १०.कर्णभारम्-२३.

*************

